॥ श्रीशः शरणं ॥

# दत्तकनिर्णयामृतम् ।

अयं च धर्मशास्त्रीयप्रबंधः

श्रीमन्नासिकमहाक्षेत्रवासिना वारे इत्युपनाम्ना

"वैदिकतिलक" श्रीमदण्णाशास्त्रिणः

सूनुना काव्यतीर्थमीमांसक-

श्रीधरशर्मणा प्रणीतः

स च

तेनैव संशोध्य संस्कृत्य च

श्रीमंत, उदारचरित, सुगृहीतनामधेयराजा-धनराज-

गिरिगुरुनरसिंगगिरिग्यानबागदक्षिण-

हैदराबाद इत्येतैर्महोदयैः प्रदत्ताश्रयेण

मुम्बापुर्यां

निर्णयसागराख्यमुद्रणयंत्रागारेऽकयित्वा प्रकाशितः ।

प्रथमावृत्तिः १०००

नासिक, शकः १८५४. मूल्यं १ रूप्यकं सन १९३२.

# आत्मनिवेदनं किंचित् ।

॥ श्रीशः शरणम् ॥

आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ॥

तैत्तिरीयोपनिषत्.

सुविदितमेवैतत्सुधियां धर्मतन्त्रविदां धर्मज्ञानमभीप्सूनां च । यच्छिरोनिर्दिष्ट-श्रुत्या गृहस्थाश्रमेतिकर्तव्यताऽवश्यं संपादनीया भूतिमिच्छद्भिर्मानवैरिति । यतो गार्हस्थ्यआश्रमे पुत्रजन्मोत्सवोऽभ्युदयस्य परां काष्ठामधिरोहति । न केवलमै-हिकाभ्युदयस्य किंतु पारत्रिकाभ्युदयस्यापीति । **अत एव श्रुत्या जेगीयते । "नापुत्रस्य लोकोऽस्ती"ति** । अत एव च मनुयाज्ञवल्क्यपराशरादिभिर्मुख्य-स्यौरसपुत्रस्याभावे दत्तकादयः पुत्रप्रतिनिधयोऽभिहिताः । प्रतिनिधिनाऽपि प्रजा-तन्तुः संरक्षितव्य इति ।

सोऽयं पुत्रप्रतिनिधिकरणविषयो धर्मशास्त्रे विविधप्राचीनार्वाचीननिबंधैः सुवि-चारिते सत्यपि एतन्नूतननिबंधनिबंधनपरिश्रमः किमर्थमिति चेदत्र किंचिदिवो-च्यते । **हेमाद्र्यादिनिबंध**कालात्पूर्वं नासीत्केषां च न विवादः स्मृतित एव निर्णयात् । इत्येतत्परमप्रमोदास्पदम् । परमिदानीं दूयते स्वान्तं । तत्तन्निबंधो-त्तरं कैश्चिद्विद्वन्मान्यैः कानिचिद्वचनान्यवलम्ब्य दत्तकः सर्वथा द्व्यामुष्यायण एवेति निर्धारितं । कैश्चिद्विद्वन्मान्यैः कानिचिद्वचनान्यवलम्ब्य दत्तकः केवल एवेति निर्धा-रितं । तथाऽपरैः पंडितैर्दत्तकः केवलो द्व्यामुष्यायणश्चेति सिद्धांतितं । एवं कैश्चि-दुच्यते दौहित्रभागिनेयौ दत्तकत्वेन ग्राह्याविति । कैश्चिदुच्यते न ग्राह्याविति । एवं केषांचन मतं कन्या दत्तका भवति । केषांचन मतं कन्या दत्तका न भवति । केवलमिदं दिङ्मात्रमुदाहृतं । एवं बह्व्यो विप्रतिपत्तयः संति । तथाचात्र विद्वन्मा-न्यानां ग्रंथप्रणेतॄणां नानाविधमतसंदर्शनाज्जायमानसंदेहनिवृत्तये प्रमाणलक्षणपरी-क्षया प्रमेयविनिर्णयो नितरामावश्यकः ।

किंच **हेमाद्र्यादिनिबंधानां महानिबंधत्वेन सर्वविषयावगाहित्वा-त्तेषु प्रसंगानुरोधेन** क्वचिद्विस्तारेण क्वचित्संक्षेपेण क्वचिच्च दिङ्मात्रप्रदर्शनेन

निर्णीतेऽप्यस्मिन्विषये साकल्येनानुपूर्व्येणानिरूपणाच्चास्य दुरवगाहत्वं संजायते स्म । यद्यपि केचन **दत्तकमीमांसादयः** स्वतंत्राः **"शास्त्रैकदेशसंबन्धं शास्त्रकार्यान्तरे स्थितं । आहुः प्रकरणं नाम शास्त्रतत्वविचक्षणाः"** इत्युक्तलक्षणाः प्रकरणग्रंथाः संति । तथापि तेषां भूमिकामनारूह्यैव मुख्यविषय-प्रतिपादकत्वेन दुर्ज्ञेयनिर्णयसिद्धांताच्चापेक्ष्यतेऽत्यन्तमिदानीं कश्चित्तादृशो ग्रंथः । यः सोपानारोहणन्यायेन भूमिकामारभ्य शिखरावधि क्रमशो दत्तकसंबंधिसकल-विषयसंग्राही प्रबंधः ।

तथाऽयं विषयो धर्मशास्त्रेऽवान्तरविभागे व्यवहारेऽन्तर्भवति । **व्यवहारश्च सर्वदा यस्मिन्कस्मिन्नपि देशे काले च राजपरतंत्रो भवति** । तत्र यदि राजा स्वदेशीयः स्वधर्मीयोऽस्ति न तदा काऽपि विप्रतिपत्तिः । तस्मात्स्वधर्मार्थ-शास्त्रानुसारिनिर्णयलाभात् । यदा तु राजा विदेशीयो विधर्मीयश्च तदा कथ-मिति समुदेति शंका । परमेतादृशेन राज्ञा न्यायः कथं देय इत्याह याज्ञवल्क्यः **"यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः । तथैव परिपाल्यो-ऽसौ यदा वशमुपागतः"** इति । एतदनुसृत्यासीतिकियत्कालपर्यन्तं स्थिति-स्तत्र तत्र न्यायालये । इदानीं तु तत्र तत्र वरिष्ठन्यायालये न्यायप्रदानेऽर्थिप्रत्य-र्थिनोरभिप्रायाविष्करणे च नियुक्तैः क्वचिद्विदेशीयैर्विधर्मीयैः पुरुषैः क्वचिच्च स्वदे-शीयैः स्वधर्मीयैरपि पाश्चात्यधर्मव्यवहारादिशिक्षाशिक्षितैः पुरुषैरस्मदीयं धर्मशा-स्त्रमर्थशास्त्रं चानालोच्यैवालोच्येति मत्वा नानाविधकुकल्पनाः समुद्भाव्याकृष्यत इतस्ततोऽयं दत्तकविषयः । तासां कुकल्पनानामपाकरणं परमावश्यकमेतस्मिन्काल इति को न संमन्येत प्राज्ञः ।

अन्यच्च **केचनेदानींतना विद्वांस आत्मानं समाजसुधारका इति मन्यमानाः** समाजशास्त्रं धर्मशास्त्रं च भिन्नं मन्वाना अस्य दत्तकविषयस्य व्यव-हारेऽन्तर्भावात्समाजशास्त्रविषयतयाऽङ्गीकृत्य तत्सममेव धर्मशास्त्रलेशसंस्पर्शाभावं च प्रतिपाद्यामुं विषयं स्वेच्छया नियमितुमीहन्ते । प्रयतन्तेऽपि ते तथा । परमेत-द्धर्मशास्त्राज्ञानमोहविलसितं तेषां । **यस्मादिदं दत्तकादीनां पुत्रप्रतिनिधि-करणं धर्मशास्त्रे पारलौकिकक्रियालोपभयपरलोकगतिनिरोधभ-यपितृऋणापाकरणत्रयमूलकमभिहितं** । दायग्रहणादिकं त्वानुषंगिकं । तेन च दत्तकविषयस्यांतःस्वरूपं धर्मानुशासनात्मकं । बहिःस्वरूपं व्यवहारशास्त्रात्मकं ।

व्यवहारशास्त्रमर्थशास्त्रं चेति नार्थान्तरं । समाजशास्त्रं तु धर्मशास्त्रान्तर्भूतमेवेति सुस्पष्टं धर्मशास्त्रपर्यालोचयितॄणां । ततः प्रकृतदत्तकविषयस्यैकांगतो विचारो माऽभूत् । किंतु सर्वांगतो भवतु । इत्येव समंजसं स्यात् ।

तदेतत्सर्वं मनसि निधाय निरमाय्ययं मया यथामति नूतनः प्रकरणग्रंथो **"दत्तकनिर्णयामृतं" नाम प्रबंधः ।** नायं ममोद्यमः केषांचिन्मंडनार्थं खंडनार्थं स्वकीयपांडित्यप्रदर्शनार्थं वा । एतन्निबंधांतर्गतविषयाणां निःसंदेहनिर्णयसंबंधे यद्यद्गुणवैशिष्ट्यं तत्तत्सर्वं **मदीयपूज्यपितृचरणारविंदश्रीसद्गुरुकृपाशीःफलमि**ति मन्यमानोऽहं तत्सर्वं श्रेयो मम महनीयतातपदकमलयुगले निदधे ।

एतन्निबंधविषयाणां वैमल्यव्यापकत्वकाठिन्यादिनाऽतिगहनत्वं क, मम मतिदौर्बल्यं च क । उत्तुंगतरुफलेप्सुरुद्बाहुर्वामन इवास्मिन्विषये यतमानोऽहं विद्वद्वराणामुपहासास्पदं भविष्यामि । तथापि **"हंसक्षीरन्यायेन"** केवलगुणगणग्रहणप्रेमानन्यवृत्तयो विद्वांसो मामनुग्रहीष्यंतीत्याशासे ।

तथाऽत्र प्रबंधे **"वेदांतवागीशे"त्युपाधिमलंकुर्वद्भिर्विद्वद्वरिष्ठवरिष्ठैः पाठकोपाभिधश्रीश्रीधरशास्त्रिमहोदयैर्म**दीयां विज्ञप्तिं स्वीकृत्य प्रस्तावना समलेखि। तत्कृते तेषामहमधमर्णोऽस्मि । तथा श्रीकाशीमधितिष्ठद्भिः— **"न्यायाचार्ये"ति पदालंकृतैः पंडितराजैः श्रीराजेश्वरशास्त्रिद्रविडमहोदयैः, तथा पुण्यपत्तननिवासिभिः "सरस्वतीभूषणे"ति पदसंभूषितैः पंडितवर्यैः श्रीवामनशास्त्रि किंजवडेकरमहोदयैरिमं** प्रबंधं सम्यगालोच्य स्वाभिप्रायप्रदानेन बहूपकृतं मयि । तथा **श्रीक्षेत्रनासिकनिवासिभिः "धर्मकार्यधुरंधरे"ति पदवीसमलंकृतैः श्रीयुतैः शौचे इत्युपनामकैराबाजीसूनुगोविंदशर्मभिः पेन्शनर. अ. डे. ए. इन्स्पेक्टरमहोदयैः** समुत्साहपुरःसरं वारंवारमुपयुक्तसाहाय्यप्रदानेनानुगृहीतोऽस्मि । तथा **श्रीक्षेत्रउज्जयिनीनिवासिभिर्विद्वद्वर्यैश्टोककरोपाह्वैः श्रीविनायकसुतदत्तात्रेयसूरिभिरस्मन्मित्रवर्यैरपि** लेखनादावतीव साहाय्यमकारीति मुदा प्रकाशयामि । तथा मोहमय्यां निर्णयसागरप्रेसाध्यक्षैः प्रचार्यमाणसंशोधनाधिकारिभि**र्विद्वच्छिरोभूषणैः पणशीकरोपाह्वैः श्रीवासुदेवशास्त्रिमहोदयैः** संशोधनेऽत्यन्तं साहाय्यप्रदानेनाधमर्णीकृतोऽस्मि ।

विशेषतः श्रीमद्भिः सुगृहीतनामधेयैः "**राजा धनराजगिरीगुरुनरसिंगगिरी ग्यानबागदक्षिणहैद्राबाद**" इत्येतन्महोदयैरस्य प्रबंधस्य प्रकाशनव्ययवितरणेन प्रसिद्धिं नीतोऽयं प्रबंधः । अतस्तेषामुपकारसंदोहं न विस्मरामि । तथा मोहमयीस्थ निर्णयसागरमुद्रणालयाधिपतिभिः **श्रीपांडुरंग-जावजीमहोदयैरस्य** मुद्रणकार्यं स्वल्पावकाशे नयनमनोहारि शुद्धतरं च कृत्वा बहूपकृतमिति मन्ये ।

तदेतस्मिन्ग्रंथे प्रमादात् दृग्दोषाद्वा यत्स्खलितं तत्संशोध्य कृपया मत्कर्णपथं नेष्यंति येन पुनर्मुद्रणावसरे तान्दोषान्परिमार्जयामि । इति तान्**दयार्द्रदृष्टीन्विदुषः** संप्रार्थ्य जोषंभावमुपाश्रये ।

श्रीक्षेत्रनाशिके.
चैत्रशुक्लप्रतिपत् बुधवासरः
शालिवाहनशकः १८५४
ता. ६-४-१९३२. इ.

विद्वद्वशंवदः
वारे इत्युपनामा "वैदिकतिलक"
श्रीमदण्णाशास्त्रिसूनुः
**श्रीधरशर्मा.**

# प्रस्तावना.

## ॐ श्रीशिवः शरणम्

वक्तारमासाद्य यमेव नित्या
सरस्वती स्वार्थसमन्विता‌सीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का
नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥ १ ॥

विदितचरमेवेदं प्रज्ञावतां विपश्चिदपश्चिमानां तत्रभवतां यद् भगवान् आदिनारायणः सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्वेदपूर्वकांडगतं प्रवृत्तिलक्षणं प्रजापतींस्तथा निवृत्तिलक्षणमुपनिषदुक्तं च सनकादीन्धर्मं ग्राहयामास । द्विविधो हि वैदिको धर्मः । **'प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणम्'** इति भगवत्पूज्यपादैः श्रीशङ्कराचार्यैर्जगद्गुरुभिराज्ञप्तत्वात् । तत्र अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसंधिवर्जितः । शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते' इति **वेदवेदान्तराद्धान्तः** । सोऽयं धर्मः प्रत्यक्षतया क्वचिद्वाक्ये **'अहरहः संध्यामुपासीतेत्यादिरूपे बोधितः'** । क्वचिच्च लिङ्गेन यथा **'जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिवाक्ये'** जातपुत्रत्वलिङ्गेन विवाहादिबोधनम् । **अयि विचारचातुरीचतुराः** । एवं लिङ्गादिद्वारा स्वधर्मोहनं तत्तत्कालीनहीनप्रतिभमानुषाणां दुर्गममालोच्यालोच्य **मनुयाज्ञवल्क्यादयः करुणावरुणालयाः पारदृश्वानो** नानासूत्रस्मृत्यादीन्महानिबंधान्प्राणैषुः । यतो महाभारते पञ्चमवेदत्वेन संस्तुते सर्वेषां कर्तव्यत्वेन धर्मसंसेवनं विहितम् । **तथाहि–धर्ममर्थं च कामं च यथावद्वदतां वर । विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः । स्मृत्यन्तरेपि–धर्ममर्थं च कामं च यथाशक्ति न हापयेत्** । तथा–**न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्यात् यथाशक्तिधर्मार्थकामेभ्यः** । किं च परमपुरुषार्थभूतस्य मोक्षस्य तत्साधनभूतस्य धर्मस्य चाभ्युदयनिःश्रेयससाधनत्वमुक्तं **पुराणादिषु** । **तथाहि–प्रवृत्तिलक्षणे धर्मे फलमभ्युदयो मतः । निवृत्तिसंज्ञके धर्मे फलं**

निःश्रेयसं मतम्। स्कान्दे च–धर्मात्सुखं च ज्ञानं च यस्मादुभय-माप्नुयात्। तस्मात्सर्वं परित्यज्य विद्वान् धर्मं समाचरेत्। इति।

स च धर्मो लक्षितस्तत्तत्स्मृतिकारैर्बहुशः। परिचयार्थं किंचिदिव लिख्यते। तथाच मनुः 'विद्वद्भिराचरितः सद्भिर्नित्यमद्वेषरागिभिः'। इत्यादि। जैमिनिश्च 'चोदनालक्षणोऽर्थो धर्मः' इत्यसूत्रत्। यतोऽभ्युदयनिः-श्रेयससिद्धिः स धर्मः। तथा 'धर्मादर्थश्च कामश्च स च कस्मान्न सेव्यते' इति व्यासः। एतत्सर्वमालोच्य–अपूर्वनिष्ठैव सुखकारण-तावच्छेदिका धर्मत्वं जातिरिति नैयायिकाः। वेदबोधितेष्ट-साधनत्वरूपो यागापूर्वोभयनिष्ठोपाधिरेव धर्मत्वमिति केचित्। वस्तुतस्तु–अलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वं विहितत्वं धर्मत्वमिति सुस्पष्टं प्रत्यपादि विद्वत्प्रकाण्डैर्गागाभट्टैः। तथास्य धर्मस्य षाड्विध्यमुक्तं विज्ञानेश्वराचार्यैर्मिताक्षरायाम्। १ वर्णधर्मः २ आश्रमधर्मः ३ वर्णाश्रमधर्मः ४ गुणधर्मः ५ निमित्तधर्मः ६ साधारणधर्मः इति—

## स्मृतीनां स्वरूपम्

धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः। द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः। इति श्रीमन्महाभारतवचसा तथा धर्मज्ञापक-हेतुषु याज्ञवल्क्येन भगवता–श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतमिति स्मृतेः परिगणनात्–स्मृतीनां धर्ममूलत्वं निर्विवादम्। श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिरिति मनूक्त्या धर्मशास्त्रं स्मृतिरिति नार्थान्तरम्। अयि प्रमाणशास्त्रप्रमाणितमतयः–इदं तु तत्र भवन्मतिपथमाटीकेतैव यन्मनुयाज्ञवल्क्यपराशरादिस्मृतिसंवादात्–स्मृतिः–आचारव्यवहारप्रायश्चित्तेति बोद्धव्यत्रयान्विता भवति यथोपनिषदो ब्रह्मज्ञानोपासनाख्यायिकेत्यवयवत्रया-न्विता भवन्ति–इति। इयं छांदोग्यबृहदारण्यकादिमहोपनिषद्वन्मनुयाज्ञवल्क्या-दिस्मृतीनां गतिः। ईशप्रश्नाद्युपनिषद्वल्लघुस्मृतीनां गौतमलिखितदेवलादीनां त्वन्यादृशी गतिः। यतस्तासु स्मृतिषु नाचारव्यवहारप्रायश्चित्ताख्यमवयवत्रयं किंतु कुत्रचिदाचारस्यैव कुत्रचिच्च प्रायश्चित्तस्यैव निर्देशः। भगवता याज्ञव-ल्क्येन मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽगिरा इत्यादिना परि-गणितास्ता इमा स्मृतयः परावरदृश्वयौगिकज्ञानपरिपूतान्तःकरणमहर्षिप्रणीतत्वा-

त्सर्वाङ्गपरिपूर्णाः सर्वावयवधर्मप्रतिपादिन्यः स्तोकेनाप्यंशेन परिवृत्तिं नार्हन्ति तथाच–अल्पस्यापि निवेशस्यापि न भाजनम् । यतस्तत्र 'आपद्धर्मादीनि प्रकरणानि निबन्ध्य महर्षिभिः सर्वकालिकधर्मप्रणेतृत्वं संसाधितमेतेनाधुना **नवीनस्मृतिः प्रणेया पूर्वस्मृतिभिरसंसाधितास्तत्कार्यत्वादिति मतं परास्तम्**–पूर्वोक्तवादिनामनालोडितस्मृतिशास्त्रत्वादनधिगततद्रहस्यत्वाच्चेति निर्विशयं ब्रूमः । यतो हि विपुलहृदयैकवेद्यं शास्त्रम् । **तथा चाभाणकः– 'विपुलहृदयैकवेद्ये खिद्यति शास्त्रे जडो न मौर्ख्ये स्वे । निंदति कंचुककारं प्रायः शुष्कस्तनी नारी' इति ।** एवं च सर्वविधधर्मस्वरूपं बोधयत्सु स्मृतिसूत्रेषु जाग्रत्स्वपि विपुलहृदयशिष्टक्षतिकृतः कलेर्विलासात्कुहृदयोद्भावितविविधशङ्काः प्रादुर्भवन्ति स्म । तासां निराकरणाय हेमाद्रिमेधातिथिविज्ञानेश्वरभट्टरामकृष्णादिभिस्ते ते निबंधा न्यबध्यन्त । पूर्वं तत्तच्छङ्कानिराकरणार्थं लिङ्गपरीक्षणमूहोद्भावनं च कर्तव्यतामाटीकतेस्म । निबंधानामुद्भवे सामान्यप्रज्ञैरपि जनैर्ज्ञायते स्म निर्विशङ्कं तत्तद्धर्मावयवस्वरूपम् । यतः पूर्वोक्ता महाविद्वांसः सर्वविधशंका उदूह्य सर्वाणि स्मृतिपुराणादिवचांसि संगृह्य संगमय्य च स्वीयान्निर्णयात्मकनिबंधग्रंथान्प्राणैषुः । इयं निबंधपरंपरा कौस्तुभमयूखनिर्णयसिंधुधर्माब्धिपुरुषार्थचिंतामणिसंस्काररत्नमालादिपर्यन्तं प्रसरति स्म । एवं च स्मृत्यादितः सामान्यमतिदुरूहार्थनिर्णयकथनात्मकं निबंधानामसाधारणकार्यं तच्च तैः प्रसंगानुसारं यथायथं संसाध्यते । यद्यपि पुरुषमतिवैरूप्यात्पाण्डित्यप्रकर्षापकर्षवशाद्वा तत्र परस्परखण्डनादिकं दृश्यते तथापि न क्षतिः । **यतोऽयं राद्धान्तः–स्मृतीनामुपदेशविधया प्रामाण्यम्–तेन तत्र यावद्वाचनिकं तावत्प्रमाणम् । निबंधानां तु विचारविधया प्रामाण्यम् ।** तेन यस्य निबंधस्य मीमांसापरिष्कृतो विचारो येन संमन्यते तेन स तस्मिन्नेवांश उररीक्रियते नान्येन तथापि न क्षतिः । मीमांसाधिकरणसाहित्यं तु कस्यापि धर्ममतस्य ग्रहणाग्रहणयोर्न प्रयोजकं यतः परस्परविरुद्धान्यपि मतानि मीमांसाधिकरणसंवलितान्युभयैरपि वादिभिः संसाधितानि दृश्यन्ते निबंधेषु सहस्रशः । तत्र श्रुत्यर्थसंदेहनिर्णायकानि मीमांसाधिकरणानि नापराध्यन्ति किंतु प्रयोजकमतिवैभवम् । प्रकृते निबंधेऽपि पूर्वनिबंधकृन्मतानि तत्र तत्र खण्डितानीति समालोचयितॄणां दृष्टिपथमापतेत् ।

## दत्तकविषये विमर्शः

दत्तकविषये किमपि विमृश्यते–द्विविधा ह्यधिकारिणः प्रवृत्तिलक्षणं धर्मं कामयमाना निवृत्तिलक्षणं धर्मं चेहमानाश्च । **तत्र नापुत्रस्य लोकोऽस्तीति** श्रुत्या पुत्रजय्यलोककामिन एव औरसाभावे दत्तकं पुत्रत्वेनात्मीयतां निन्युः । **तदितरे 'किं प्रजया करिष्यामो येषां नोऽयमात्मा नायं लोकः' इति** पूर्वश्रुतिबाधिकयौपनिषदश्रुत्यात्मलोकमात्मसाचिकीर्षवो नापेक्षेरन्पुत्रप्रतिग्रहमल्पफलत्वादात्मज्ञानप्रतिबंधकत्वाच्च ।

## प्रकृतनिबन्धः ।

**अयि श्रेष्ठाः प्रकृतनिबंधो दत्तकनिर्णयामृतं नाम** । अयं च दत्तकविषयः स्मृत्यवयवेषु त्रिष्वन्यतमस्य व्यवहारस्य विषयेऽन्तर्भवति । अस्याऽपि स्मृतिषु यथावकाशं वर्णनं विलसति । ततः सांगोपाङ्गं दत्तकमीमांसा–दत्तकचंद्रिकादिषु विवरणं प्रसृतम् । ततः 'परमधुना औपासनि रघुनाथशास्त्रिप्रभृतिभिरपि निबंधाः प्राणायिषत । एतेषु सर्वेषु सत्स्वपि प्रस्तुतमहाभूपन्यायालये (हायकोर्ट प्रिव्हिकौन्सिल) दत्तकविषये विविधशंकाः प्रभवन्त्यप्रतिहतप्रसरम् । तथाच ज्येष्ठः पुत्रः प्रतिग्राह्यो न वा । एकः पुत्रः प्रतिग्राह्यो न वा । होमस्य नान्तरीयकत्वं न वेत्यादि । त एते सर्वे विषयाः कथमपि निर्णीयन्ते तत्तन्न्यायालयाधिकृतैः–तदा तदाऽन्योन्यविरुद्धं स्मृत्यादिशास्त्राणामनभ्यासाद्विदेशीयत्वेन सहजसुलभांस्तानेतान्कुकल्पानपाकर्तुं **काव्यतीर्थोपाधिमलंकुर्वद्भिः 'वारे श्रीधरशास्त्रिभिः' दत्तकनिर्णयामृताख्यो ग्रंथः संगृहीतः** । सुदृढं प्रतीयते यदेभिः सकलनिबंधकृतपरिश्रमैः सत्त्वसंदोहवशान्निबंधान्तरस्वारस्यग्राहिभिः मर्मग्राहितया विमर्शशीलैर्निबंधरूपमिदं निर्णयामृतं प्रदाय संजीविताः कुकल्पविषहताः सकलाधिकारिमनुजाः । **सोऽयं निबंधो** दत्तकशास्त्रविचारजिघृक्षूणां जीवातुर्जायान्मनोविनोदं विधातुं विदुषामिति संप्रार्थयन्यार्वतिजानिं परमेश्वरं विरमति ।

चैत्रशुक्लनवम्यां शुक्रवासरे
शालिवाहनशकः १८५४
ता० १५–४–१९३२ इ.
(पुण्यपत्तने डेक्कनकॉलेज)

**विद्वद्वशंवदः**
**पाठकोपनामा श्रीधरशर्मा**
पुण्यपत्तने डेक्कनकॉलेज.

# अभिप्रायः

श्रीरस्तु । श्रा. व. १३ गुरुवार १८५३

नासिकक्षेत्रतः—

श्रीमतां सुगृहीतनामधेयानामण्णाशास्त्रिमहोदयानां तनुजनुषा "वारे" इत्युपाह्व **श्रीश्रीधरशास्त्रिणा प्रहितं 'दत्तकनिर्णयामृतं'** नाम ग्रन्थरत्नमवाप्तमालोचितं च। यद्यपि सन्त्येव दत्तकचन्द्रिका–दत्तकमीमांसाप्रभृतयो दत्तकनिर्णयविषयका अनेके पूर्वतना निबन्धग्रन्थास्तथापि परस्परं मतभेदाभासादिना दुर्ज्ञेयनिर्णयेऽस्मिन्परमावश्यके दत्तकविषयेऽभिनवस्यास्य प्राचीनाशेषतद्विषयकनिबन्धोदधिनिर्मन्थनाविर्भूतस्य दत्तकनिर्णयामृतस्य न केनापि सम्पाद्यतेऽन्यथासिद्धिः। नूनमनेनामृतेन बहुतरजटिलदत्तकग्रन्थनिर्मन्थनसमुद्भूतप्रबलमहामोहविषविषूचिकादन्दह्यमानचेतसां सचेतसां समुज्जीवनं भविष्यतीति विश्वसिमि। पुरुषबुद्धिसंसर्गतः स्वभावत एव कदाचिद्दोषलेशसम्भवेऽपि गुणैकपक्षपातिनः सुधिय आत्मसात्कृत्वा सफलयिष्यन्त्येव ग्रन्थकृतामायासमित्याशासे।

राजेश्वरशास्त्रि द्राविडः
१०।९।३१
शिवकुमारभवन,
( श्रीक्षेत्रकाशी ) कालिकाता–
नगरी.

# अभिप्रायः

मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वा विवेकतः ।
न्यायमार्गे महान्दोष इति यत्नोपचर्यता ॥

श्रीधर अण्णाशास्त्रि वारे इत्येतेभ्यः वेदोक्ताशिषः—

अयि महाभागाः! मीमांसासहितधर्मशास्त्रे कृतपरिश्रमाः श्रीमद्भिः प्रेषितो **दत्तकनिर्णयामृतनामा** निबंधोऽवालोकि सुसंपन्नोयं किल सर्वथायं ग्रंथ इति निवेदयितुं समुत्कण्ठतेऽस्माकमन्तरङ्गम् ।

यद्यप्यल्पशः क्वापि भवेद्विप्रतिपत्तिस्तथापि सा नान्तरीयकेति विदुषां तत्रापि ग्रंथकृतां तत्सौभाग्यस्थानीयेति न विमतः पन्थाः । तदेतदमृतपानप्रयोगोऽपि तत्र संगृहीतः सुबहूपकृतं याज्ञिककल्पेषु श्रीमद्भिः ।

वार्तिकोक्तमिति ग्रंथस्येतोपि विवरणमावश्यकमासीत् । भवतु नाम न तेन कापि क्षतिः ।

एतदमृतं पायं पायमखिलस्य जगतः संतानवृक्षोऽहर्निशं समेधतामिति सनातनं भगवन्तं प्रार्थयामः—

साक्षादपरकात्यायन-अण्णाशास्त्रिणां पुरतोऽस्मदभिप्रायोऽकिंचित्करः । न वयं तेषां पुरतः किमपि वक्तुं लिखितुं प्रभविष्यामः । तेषामभिप्रायापेक्षया तैरेकदा सम्यगवलोक्य प्रथयितव्योयं निबन्ध इति मदीया मतिः ।

चैत्रशुक्ल १० शनौ
१८५४
पुण्यपत्तनं.

**वामन रामचंद्र किंजवडेकर**

श्रीमंतपरमोदारचरितसुगृहीतनामा राजाधनराजगिरी
गुरुनरसिंगगिरी. ग्यानबाग. दक्षिणहैदराबाद.



श्रीमते महामनसे विख्यातयशसे परोपकरणकृतये सकलगुणैकनिधये धर्मश्रद्धालवे धार्मिकग्रंथप्रकाशनेऽविरतधृतसमादराय प्रकृतप्रबंधप्रकाशनव्ययकराय राज्ञे "धनराज-गिरीगुरुनरसिंगगिरी" महोदयाय बहुधन्यवादपुरःसरां महतीमाशीःपरंपरां सहृदयं सानन्दं वितरति ग्रंथकर्ता श्रीधरशास्त्री ।

वैदिकतिलक–पूज्यपादतीर्थरूपश्रीमदण्णाशास्त्रीवारे.



जन्म-माघशु. ८ बुधवार शाके १७९१.

# अर्पणपत्रम्

श्रौतस्मार्तादिकर्मानुष्ठानगरिष्ठनैपुण्यसद्यशोमंडनमंडितप-
ण्डितप्रवराणां—सद्धर्माचारचरणसंपादितपवित्रचरित्र-
संतुष्टशिष्टजनहृत्कमलानां—अनेकविषयानुबंधिप्रब-
न्धबन्धापासारिताज्ञानतिमिरनिकराणां—मदीय-
बाल्यमारभ्यविविधानवद्यविद्यागुणगणशिक्ष-
णोन्नत्यर्थकृतानवरताविश्रान्तपरिश्रमाणां—
सुगृहीतनामधेयानां—वैदिकतिलकश्री-
मदण्णाशास्त्रिणां—चरणसरोजसी-
मनि मयामितमतिना—रचि-
तोऽयमल्पकृतिको ग्रंथः
सप्रश्रयं समर्प्यते—

ग्रंथकर्त्रा—

तत्तनूजन्मना श्रीधरशर्मणा—

## ॥ दत्तकनिर्णयामृतस्थ-विषयानुक्रमः ॥

**इति विषयानुक्रमः।**

## (दत्तकनिर्णयामृतस्थ-)

## ग्रंथानां ग्रंथकृतां च नामानि

१ श्रुतिः ... वेदः
२ जैमिनीयसूत्रं ... पू. मी.
३ मनुस्मृतिः ... स्मृ. ध.
४ बौधायनदर्शनं(सूत्रं) वेदांगं
५ कलिवर्ज्यशास्त्रं ... नि. ध. शा.
६ पुत्रकल्पलता ... प्र. ध. शा.
७ दत्तकमीमांसा. प्र. ध. शा.
८ (स्मृति)कौस्तुभः नि. ध.
९ मन्वर्थमुक्तावली म. स्मृ. टी.
१० गोत्रप्रवरनिर्णयः प्र. ध.
११ मिताक्षरा. ... या. स्मृ. टी.
१२ (मदन) पारिजातः नि. ध.
१३ इतिहासः ... भारतं.
१४ पुराणं. ... ब्राम्हादि.
१५ कात्यायनसूत्रं प्रव-
राध्यायः ... सू. प. शि.
१६ लौगाक्षिसूत्रं. ... वेदांगं
१७ पुरुषार्थचिंतामणौ
संस्कारकांडं. ... नि. ध. शा.
१८ निर्णयसिंधुः ... नि. ध. शा.
१९ धर्मनौका. ... नि. सिं. टी.
२० शूद्रकमलाकरः... नि. ध. शा.
२१ (संस्कार)कौस्तुभः नि. ध.
२२ धर्मद्वैतनिर्णयः ... नि. ध.
२३ दत्तकचंद्रिका ... प्र. ध.
२४ कालिकापुराणं ... पुराणं.
२५ दत्तोद्धारः ... प्र. ध.
२६ नारायणवृत्तिः ... आ. सू. टी.
२७ गाणेशीवृत्तिः ... आ. सू. टी.
२८ सापिंड्यप्रदीपः ... नि. ध. शा.
२९ प्रयोगपारिजातः कर्मकांडं.
३० शु. य. कर्मकांड-
प्रदीपः ... कर्मकांडं
३१ सापिंड्यमीमांसा प्र. ध. शा.
३२ स्मृतिचंद्रिका ... नि. ध. शा.
३३ प्रवरदर्पणः ... प्र. ध. शा.
३४ चतुर्विंशतिमतं ... नि. ध. शा.
३५ संस्कारमयूखः ... नि. ध. शा.
३६ गौतमसूत्रं ... वेदांगं.
३७ प्रवरमंजरी. ... प्र. अ. टी.
३८ देवलस्मृतिः .... स्मृ. ध. शा.
३९ याज्ञवल्क्यस्मृतिः स्मृ. ध. शा.
४० कातीयश्राद्धसूत्रं. वेदांगं
४१ बालबोधिनी. ... द. मी. टी.

४२ शुद्धिमयूखः ... नि. ध. शा.
४३ षडशीतिः ... प्र. ध. शा.
४४ निर्णयामृतं. ... नि. ध. शा.
४५ प्रयोगदर्पणः ... कर्मकांड
४६ स्मृत्यर्थसारः ... नि. ध. शा.
४७ रेणुकारिका. ... का. स्मा. टी.
४८ त्रैर्यंबकीय-आशौचं प्र. ध. शा.
४९ भट्टोजीदीक्षितकृत-
आशौचनिर्णयः प्र. ध. शा.
५० आशौचसंग्रहः ... प्र. ध. शा.
५१ षडशीतिव्याख्या टीका
५२ कृष्णंभट्टी ... (नि. सिं. टी.)

---

१ शबरस्वामी. पू. मी. भा. का.
२ माधवाचार्यः जै. न्या. मा. का.
३ जैमिनिः ... पू. मी. सू. का.
४ मनुः ... म. स्मृ. का.
५ कुल्लूकभट्टः ... म. स्मृ. टी.
६ राघवानंदः... म. स्मृ. टी.
७ याज्ञवल्क्यः या. स्मृ. टी.
८ गृह्यकारः(पार-
स्करः) ... स्मा. सू. का.
९ वसिष्ठः ... ध. सू. का.
१० मेधातिथिः ... म. स्मृ. टी.
११ नंदनः ... म. स्मृ. टी.
१२ अत्रिः ... अ. स्मृ. का.
१३ नारदः ... ना. स्मृ. का.
१४ गौतमः ... गौ. ध. का.
१५ सर्वज्ञनारायणः म. स्मृ. टी.
१६ कात्यायनः... का. स्मृ. का.
१७ पराशरः ... प. स्मृ. का.
१८ बृहस्पतिः ... बृ. स्मृ. का.
१९ नंदपंडितः ... द. मी. का.
२० मीमांसकाः... मी. शा. विदः
२१ विज्ञानेश्वरः... या. स्मृ. टी.
२२ अपरार्कः ... या. स्मृ. टी.
२३ भट्टनिलकंठः मयूखकारः
२४ भट्टकमलाकरः नि. सिं. का.
२५ (योगी) योगी-
श्वरः ... याज्ञवल्क्यः
२६ शाकलः ... शा. स्मृ. का.
२७ वृद्धगौतमः वृ. गौ. स्मृ.
२८ गोविंदराजः म. स्मृ. टी.
२९ रामचंद्रः ... म. स्मृ. टी.
३० बृहन्मनुः ... बृ. म. स्मृ. टी.
३१ भट्टशंकरः ... ध. द्वै. नि.
३२ नागोजीभट्टः द. चं. का.
३३ कृष्णंभट्टः ... नि. सिं. टी.
३४ औपासनिको
रघुनाथभट्टः द. नि. का.
३५ सत्याषाढः ... ध. सू. का.

३६ संग्रहकारः ... आ. नि. का.
३७ हेमाद्रिः ... च. चिं. का.
३८ प्रवरमंजरीकारः ... पु. पं.
३९ धर्मसिंधुकारः बाबापाध्ये
४० आश्वलायनः स्मा. सू. का.
४१ पैठीनसिः ... पै. स्मृ. का.
४२ शूलपाणिः ... ध. नि. का.
४३ भट्टसोमेश्वरः तं. वा. टी. का.
४४ हरदत्तः ... गो. सू. टी.
४५ आपस्तंबः ... आ. स्मृ. का.
४६ बौधायनः ... बौ. स्मृ. का.
४७ कार्ष्णाजिनिः का. स्मृ. का.
४८ भरतचंद्रशिरोमणिः ... द. मी. टी.
४९ भामतीकारः...वे. शा. भा. टी.
५० विष्णुः ... वि. स्मृ. का.
५१ शंखः ... शं. स्मृ. का.
५२ हारितः ... हा. स्मृ. का.
५३ मरिचिः ... म. स्मृ. का.
५४ प्रजापतिः ... प्र. स्मृ. का.
५५ कौशिकाचार्यषडशीतिकारः
५६ विबुधनृसिंहवल्लभः... जा.वि.का.

॥ इति ॥

---

# मंगलाचरणम्

आदौश्रीकुलदेवतामिह[1] महालक्ष्मीयुतां रेणुकां ॥
भक्ताभीष्टकरीं मतिस्मृतियशोर्थायुःपरानंददां ॥
प्रत्यूहौघविदारणक्षममथोद्वैमातुरं शारदां ॥
सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥ १ ॥
अज्ञानवार्धिं परिशुष्ययन्मे ज्ञानं त्वदादाश्रुतितंत्रयुग्मं ॥
यत्क्षोणिवृन्दारकवृन्दवन्द्यं नित्यं नमामो गुरुमंडलं तत् ॥२॥
ॐ नमः श्रीमत्सद्गुरुहृदयानंदसरस्वतीचरणकमलेभ्यः ॥ ३ ॥
श्रीगोदातटगार्च्यनासिकवसन् माध्यंदिनाम्नायवित् ॥
श्रौतस्मार्तविधानकौशलमतिर्ह्यार्षेयपाराशरः ॥
वारे इत्युपनामसत्कुलजनिर्जैरामे[2]पौत्रः सुधीः ॥
आत्याजी तनुजोऽस्ति वेदतिलकः श्रीश्रीमदण्णाभिधः ॥४॥
श्रौतस्मार्तविधौ कुशाग्रधिषणो धर्मागमे मर्मभि-
न्मीमांसानयकोविदः श्रुतिकृती साहित्यतीर्थांकितः ॥
नत्वाताতपदारविंदयुगलं तद्देहजःश्रीधरः ॥
ग्रंथं "दत्तकनिर्णयामृत"महं कुर्वेऽज्ञबोधार्थकम् ॥ ५ ॥
पुराण इत्येव न सर्ववित्स्यान्नव्यो गुणी ज्ञः किमुनार्चनीयः ॥
चेदस्ति नव्येऽपि हि दोषलेशो नोपास्यते धूमयुतः किमग्निः ॥६॥

---

१ ग्रंथारंभे. २ महाराष्ट्रभाषानुवादः.

श्रीः

# दत्तकनिर्णयामृतम् ।

१ अथ । ''प्रजामुत्पादये''दिति विधिश्रुतौ भावनाया भाव्याकांक्षायां विधिशेषोपात्तं पित्रानृण्यं भाव्यत्वेनान्वेति रात्रिसत्रन्यायात् ।

पुत्रोत्पादनविधिः

२ तथाचायं विधिशेषः । ''जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा स्या''दिति ।

विधिशेषः

३ विधिशेषे ब्राह्मणग्रहणमुपलक्षणमित्युक्तं ''ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगा''दित्यधिकरणे भाष्यकृच्छबरस्वामिमाधवाचार्यप्रभृतिभिः ।

ब्राह्मणपदस्योपलक्षणत्वं

४ पूर्वोक्तश्रुतौ ''ब्रह्मचारी वा स्यादि''त्यत्र वाशब्दश्चार्थे । चार्थः समुच्चयः । तेन ऋणत्रयापाकरणं त्रिभिर्हेतुभिः संपाद्यं । पूर्णानृण्यं च नैकेन हेतुना संभवतीति तदर्थः ।

वाशब्दार्थः

५ सचायं ''प्रजामुत्पादये''दिति विधिर्नित्यः । तस्य च ''ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगा''दित्यस्मिन्नेवाधिकरणे जैमिनिमुख्यैर्विश्वजिन्न्यायेन

विधेर्नित्यत्वप्रतिपादनं

१ इयं श्रुतिः श्रीमाधवाचार्यकृतजैमिनीयन्यायमालाविस्तरे अ० ६ पा० २ अ० ११ इत्यत्रोपलभ्यते ।

कर्मियोगमाक्षिप्य काम्यत्वमाशंक्य च ऋणवाक्येन संयोगादिति हेतूपन्यासेन काम्यत्वं बाधित्वा नित्यत्वं **राद्धांतितं ।**

६ **अतो** "नापुत्रस्य लोकोऽस्ती"तिश्रुतेः । पूर्वोक्तविधिशेषात् "अनुत्पाद्य सुतान्न लोकं गच्छती"ति स्मृतेश्चाप्रजास्त्वमूलकपरलोकगतिनिरोधनिरासार्थं पित्रर्णापाकरणार्थं चानुषंगत ऐहलौकिकफलसिद्धये च स्वस्मिन्पुत्रवत्त्वमवश्यं निर्वर्तनीयमिति **भावः ।**

पुत्रवत्त्वमवश्यं संपादनीयं

७ **नच विधौ पुंस्त्र्यपत्यसाधारण्येन** प्रयुक्तः प्रजाशब्दः । तस्मात्कन्यावत्तयाऽपि पित्रर्णनिवृत्तिर्वाच्या । कन्यकायां सत्यामपि पुत्रप्रतिनिधिकरणोपदेशवैयर्थ्यप्रसक्तेः । तस्मात्प्रजाशब्दः पुंस्त्वविशिष्टापत्यपरएवेति **निश्चिनुमः ।**

प्रजाशब्दः पुंस्त्व-विशिष्टापत्यपरः

८ तेन पित्रानृण्यमुद्दिश्य पुत्रं जनये**दिति**—पुत्रोत्पादनविधेरर्थः पर्यवस्यति ।

विध्यर्थः

९ **कः** पुत्रपदार्थ इति जिज्ञासायामाह मनुः—**अ० ९ श्लो०** १३८ "पुंनाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवे"ति ।
पुंनाम्नो नरकविशेषात्पितरं सुतो यस्मात्त्रायते तस्मात्त्राणाद्धेतोः स्वयमेव ब्रह्मणा पुत्रः प्रोक्त इति तदर्थः ।

पुत्रशब्दार्थः

१० (१) सच पुत्रशब्दो मुख्यवृत्त्या औरसमभिधत्ते। **तथाच श्रुतिः**—"अंगादंगात्संभवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शत" मिति ।
मनुस्मरणमपि "स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पाद-

पुत्रशब्दस्य वाच्योऽर्थ औरसः

येद्धि यः । तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकं" इति । संस्कृतायां कन्यावस्थायामेव कृतविवाहसंस्कारायां । औरसं उरसा निर्मितं । उरसोऽण्च इत्यण् । स्वजाते त्वौरसोरस्याविल्यमरः । प्राथमकल्पिकं मुख्यं । स्वक्षेत्रं तु सजातीयमेव । "सवर्णायां संस्कृतायामुत्पादितमौरसं पुत्रं विद्यादि"ति बौधायनदर्शनात् इति व्याचख्यौ कुल्लूकभट्टः । तथा चात्र राघवानंदः—स्वयमुद्वाहितायामुरःसंश्लेषेण जातत्वादौरसः । क्षेत्रजे तद्भावो नारदेनोक्तः "गात्रैर्गात्राण्यसंस्पृशन्नि"त्यादिना । "सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं जानीयादि"ति बौधायनदर्शनात्सजातीयोत्पन्न औरसः । अत्र सवर्णापदं द्विजत्वादिजातिपरं । अन्यथा क्षत्रियावैश्याशूद्रासु जातानां विप्रादित्रयपितृकाणामौरसत्वाभावेनापुत्रत्वापत्तिरिति । तत्र परं सजातीये मुख्यमौरसत्वमन्येषां गौणमिति भावः । स्वक्षेत्र इति स्वक्षेत्रशब्दस्याजहल्लिंगता । प्राथमकल्पिकमुत्सर्गतः सर्वत्राधिकारिणमिति व्याकृतवान् ॥

(२) गुणगुणिभावं मनुयाज्ञवल्क्यावपि संमन्वाते । "चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः । वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेदि"ति । "चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः । क्षत्रजास्त्रिद्व्येकभागा विड्जाता द्व्येकभागिनः" इति । अंशांशतो न्यूनदायाधिकारोक्तिरिति तदर्थः । यत्तु—"क्षत्रियावैश्याशूद्रासु जातानामितिवदता राघवानंदेनोक्तशूद्रापुत्रस्यौरसत्वेऽपि न पित्रोः श्राद्धादिकर्मार्हत्वं । "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतिमूलक "यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । नैतन्मम मतं यस्मात्तत्रायं जायते स्वयमि"ति याज्ञवल्क्यस्मृतिविरोधात् । गृह्यकारैः—"सर्वे-

षा१शूद्रा मंत्रवर्जमि"ति हेतुनिर्देशाच्च । न च मनुस्मृतेर्नवमाध्यायस्याष्टसप्तत्युत्तरशततमश्लोकीयव्याख्यायां "यद्यप्ययं पित्रुपकारार्थं श्राद्धादि करोत्येव तथापि असंपूर्णोपकारित्वाच्छवव्यपदेशः" इति ब्रुवता कुल्लूकभट्टेन तस्य पित्रोः श्राद्धादिकर्मार्हत्वं त्वस्त्येवेति सममानीति चेन्मैवं । उक्तस्मृतिविरोधात्त्वदुक्त "असंपूर्णोपकारित्वादि"ति हेतोर्विरोधाच्चेति ।

११ पुत्रपदं पौत्रप्रपौत्रयोरुपलक्षणं । "पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमि"ति । "लोकानन्त्यं दिवः प्राप्तिं पुत्रपौत्रप्रपौत्रकैरि"ति वसिष्ठयाज्ञवल्क्याद्युक्ते"र्नापुत्रस्य लोकोऽस्ति"इत्यादिश्रुतिबोधिताऽलोकत्वपरिहारस्य पौत्रप्रपौत्राभ्यामपि सिद्धेरिति ज्ञेयम् ।

पुत्रपदस्योपलक्षणत्वं

१२ लोकश्रुतिदर्शितपुत्रपौत्रप्रपौत्रात्यन्ताभावनिमित्तकपरलोकगतिनिरोधभयात्क्रियालोपभयाच्च प्रजोत्पादनविधेर्नित्यत्वेन तल्लोपो माभूदित्येवमर्थं च पुत्रप्रतिनिधीनाचख्यौ स एव मनुः—"क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण" इति । पुत्रोत्पादनविधिलोपः पुत्रकर्तव्यश्राद्धादिलोपश्च माभूदित्येवमर्थं पुत्रप्रतिच्छंदकान्मुनय आहुरिति कुल्लूकभट्टाः । मुख्याभावे प्रतिनिधिः । अतोऽसत्यौरसे एते कर्तव्या इत्युक्तं भवति । क्रियालोपाद्धेतोः क्रियतेऽपत्यमुत्पादयितव्यमित्यस्य विधिलोपो माभूदित्येवं नित्यो ह्ययं विधिः । स

प्रतिनिधिकरणं

---

१ यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतं ।
स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥

यथाकथंचिद्गृहस्थेन संपाद्यः। तत्र मुख्यकल्प औरसः। तदसंपत्तावेते कल्पा आश्रयितव्या इति मेधातिथिः। मुख्ये संभवत्यौरसे तत्प्रतिनिधिभिस्तत्कार्यं न कर्तव्यमित्यभिप्राय इति नंदनः।

प्रतिनिधिसंख्या

१३ ते च प्रतिनिधयो मनुवचने एकादशेति पदोपादानादेकादशैवेति। एते सर्वे लक्षणकथनावसरे स्पष्टा भविष्यंति।

पुत्रसंख्यानियमः

१४ एवं चैक औरस एकादशप्रतिनिधयो मिलित्वा पुत्रा द्वादश। ननु त्रयोदशस्य पुत्रिकापुत्रस्य सत्त्वात्कथं द्वादशैवेति नियम्यत इति चेदुच्यते। "दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्। स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च॥ पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः। तयोर्हि मातापितरौ संभूतौ तस्य देहतः॥ पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते। दौहित्रोऽपि ह्यमुत्रैनं संतारयति पौत्रव"दित्युक्तमानवीयेभ्यः पुत्रिकापुत्रस्य प्रशस्ततरत्वश्रवणात्तस्य प्रतिनिधिषु प्राथम्येन निवेशः कर्तुमुचितएवेति। याज्ञवल्क्येन "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः" इत्येवं कृतोऽपि घट्टकुटीप्रभातन्यायेन द्वादशत्वनियमाभावापत्तिस्तदवस्थैव शूद्रापुत्रस्य सत्त्वादिति चेन्न। यद्यपि द्वादशानां मध्ये मनुना शूद्रापुत्रः पठितस्तथापि तत्पाठस्तस्य धनानर्हत्वज्ञापनार्थं। न प्रतिनिधित्वज्ञापनार्थं। तथाच "श्रेयसः श्रेयसोऽलाभे" इति मानवीयवचोव्याख्यायां कुल्लूकभट्टाः। "शूद्रापुत्रस्य द्वादशपुत्रमध्येपाठः क्षेत्रजादिसद्भावे धनानर्हत्वज्ञापनार्थत्वेन सार्थकः। अन्यथा तु क्षत्रियावैश्यापुत्रवदौरसत्वात्क्षेत्रजादिसद्भावेऽपि धनं लभेदिति।" सत्येवं द्वादशमध्यतः शूद्रापुत्रमपकृष्य तन्मध्ये याज्ञ-

वल्क्यैकवाक्यतालाघवेन कृते पुत्रिकापुत्रनिवेशे पुत्रा द्वादशैवेति नियमो भवत्येवाप्रतिहतः। परमेवमत्र ध्येयं। अयं च पुत्रिकापुत्रः अभिसंधायोढपुत्रिकायाः पुत्र इति।

औरसपुत्रे पुत्रिकापुत्रे च सत्येते न कर्तव्याः

१५ न चोक्तप्रतिनिधिष्वन्यबीजजा य उक्तास्ते न प्रतिनिधयः कर्तव्याः। "य एतेऽभिहिताः पुत्राः प्रसंगादन्यबीजिनः। यस्य ते बीजतो जातास्तस्य ते नेतरस्य त्वि"ति मानवादितिचेन्न। कुल्लूकभट्टैः "सत्यौरसे पुत्रे पुत्रिकायां च सत्यां न कर्तव्या" इत्येवंपरमिति व्याख्यातत्वात्। पुत्रिकायामिति तस्यां जनिष्यमाणपुत्रस्य पुत्रीकरणसंभवादिति पुत्रिकापदे गूढाभिसन्धिः।

बहवः प्रतिनिधयो न कार्याः

१६ ननु "एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत्। यजेत चाश्वमेधेन नीलं वा वृषमुत्सृजेदि"त्यत्रिस्मृतेर्बहुपुत्रैषणावत्पुत्रप्रतिनिधयो बहवः कर्तव्या इति चेन्न। मनुना लोकप्राप्त्यभावक्रियालोपभयमेव पुत्रप्रतिनिधिकरणे बीजमुक्तं। तस्यैकेन प्रतिनिधिना निर्वृत्तौ अनेकेषामप्रयोजनवत्त्वात्। "ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति॥ यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते। स एव धर्मजः पुत्रः कामजानितरान्विदुरि"ति। "पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखं। ऋणमस्मिन्सन्नयत्यमृतत्वं च गच्छति॥ जातमात्रेण पुत्रेण पितॄणामनृणः पिता। तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि स" इति। मन्वत्रिभ्यामेकेनैव पुत्रेण लोकप्राप्तिसिद्धिक्रियानिर्वृत्तिरूपपित्रानृण्योक्तेश्च। प्रतिनिधीनां च तन्मूलकत्वान्न बहवः प्रतिनिधयो विधेया इति। उक्तस्मृतिस्तथान्या अपि

तत्समानाः स्मृतयश्च कामजपराः । अथवा पुत्राणां गयाव्रजनार्थमुन्मुखीकरणत्वेनार्थवादसदृशाः । अतएव न बहुपुत्रेषणाविधायकाः ।

प्रतिनिधिक्रमनिरूपणं

१७ एतेषु वक्ष्यमाणैकादशप्रतिनिधिषु पूर्वपूर्वस्याभाव उत्तरोत्तरोऽभ्युपेयः । "श्रेयसः श्रेयसोऽलाभे पापीयान्रिक्थमर्हती"ति मानवात् । "पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः" इति याज्ञवल्क्योक्तेश्च । स च पूर्वोत्तरीभावदर्शकः क्रम "औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च । कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा । स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्तिता" इति नारदेनोक्तः । "पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः । कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयंदत्तक्रीता गोत्रभाजः" इति गौतमेनोक्तः । "औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्ना इत्येते दायादा बांधवास्त्रातारो महतो भयादित्याहुः । सहोढदत्तकक्रीतस्वयंदत्तापविद्धशौद्रा इत्येतेऽदायादा बांधवा" इति वसिष्ठेन प्रकारान्तरेणोक्तः । "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बांधवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवा" इत्ययं मनुनाऽपि प्रकारान्तरेणोक्तः । "औरसः १ पुत्रिकासुतः २ क्षेत्रजः ३ गूढजः ४ कानीनः ५ पौनर्भवः ६ दत्तकः ७ क्रीतः ८ कृत्रिमः ९ स्वयंदत्तः १० सहोढजः ११ अपविद्धः १२ पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः" इति याज्ञवल्क्येनापि प्रकारान्तरेणोक्तः । अत्र नारदोक्तक्रमविषये निर्णयसिंधुटीका—इति नारदीयः पाठक्रमः ।

तथापि परिगणनमात्रेण कल्प्यक्रममपेक्ष्य "एषां पूर्वाभावे परः परः" इति प्रत्यक्षतो विहितक्रम एव ग्राह्य इति। गौतमीयः क्रमोऽपि परिगणनमात्रेण कृत इति हेतोः प्रत्यक्षक्रमाद्दुर्बलः। वासिष्ठोऽपि गौतमन्यायेनैव गौतमीयवद्दुर्बलः। अथवा वक्ष्यमाणमनूक्तक्रमवद्व्याख्येयः। षट् दायादाः षडदायादा इति ग्रहणात्। मनुयाज्ञवल्क्योक्तक्रमविषये "श्रेयसः श्रेयसोऽलाभे" इत्येतन्मानवीयव्याख्यायां सर्वज्ञनारायणः। तत्र औरसपुत्रिकाजक्षेत्रजगूढजकानीनपौनर्भवदत्तकक्रीतकृत्रिमस्वयंदत्तसहोढजापविद्धानुक्रमेण परिगणय्य याज्ञवल्क्येन "पिंडदोंऽशहरश्चैषां पूर्वाभावे परः परः" इति विशेषतो विधानात्तद्वचनानुसारेण कर्तव्यः। अत्र तु क्रमपाठो न पूर्वपूर्वोत्कर्षापादनार्थः किंतु स्वबंधुदायादबांधवविवेकपर इति। तेनात्र प्रतिनिधिषु याज्ञवल्क्योक्तक्रमोऽनुसंधेय इति।

**प्रतिनिधिकरणेऽधिकारिणः**

१८ तत्प्रतिनिधिकरणत्वं च पुत्रपौत्रप्रपौत्राभावे मन्वादिभिरभिहितत्वादपुत्रवत एव पुत्रप्रतिनिधिकरणेऽधिकार इति। तदेव स्पष्टयत्यत्रिः—"अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नत" इति। अपुत्रोऽजातपुत्रो मृतपुत्रश्च। "अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च। दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत्" इति शौनकस्मरणात्। नचात्र कदाचिच्छंक्यं। अपुत्रपदेन ब्रह्मचारिणोऽप्यधिकारः स्यादिति। ब्रह्मचारिणस्तु पुत्रित्वासंभावनया पित्रर्णाभावात्। प्रपंचितं चैतद्धामत्यादिषु। स्नातकस्यतु भवत्येवाधिकारः। तस्य गृहस्थाश्रमान्तरोन्मुखत्वेन पित्रर्णसंभवात्। ततश्चापुत्रस्यैव पुत्रीकरणविधानात्पुत्रवतः पुत्रीकरणेऽनधिकार इति। पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणमिति प्रागुक्तमेव।

१९ यत्तु विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रप्रतिग्रहलिंगदर्शनं तदपुत्रेणैवेत्यादिविधिविरोधात् श्वजावनीभक्षणवन्न श्रुत्यनुमापकमिति ध्येयं। न च स्मार्तो विधिः श्रौतलिंगस्य न बाधक इति वाच्यं। "नापुत्रस्य लोकोऽस्ती"त्याद्यपुत्राधिकारिकपुत्रप्रतिनिधिविधायकप्रत्यक्षश्रुत्युपष्टंभेन तस्यैव बलवत्त्वादिति वीरमित्रोदये।

पुत्रे सत्यपि क्वचित्पुत्रप्रतिग्रहो दृष्टस्तस्य खंडनं

२० नन्वत्रिवाक्ये 'अपुत्रेणेति' पुंस्त्वश्रवणात्स्त्रियाः पुत्रप्रतिनिधिकरणे नास्त्यधिकार इति चेन्मैवं। "अपुत्रेणे"त्यत्र पुंस्त्वाविवक्षणात्। तथाहि—तत्र हि लिंगं विवक्षितं भवति। यत्र लिंगस्य प्रकृत्यर्थता विधेयसंस्पर्शिता वा। नात्र प्रकृत्यर्थो लिंगं। तस्य "टाङ्" इति पुंलिंगविभक्तिविकारेणाभिहितत्वात्। नापि विधेयसंस्पर्शित्वं। "अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदे"त्यात्रेयशास्त्रेणापुत्रमधिकारिणमुद्दिश्य पुत्रप्रतिनिधिकरणत्वविधानात्। ततश्च लिंगस्य प्रकृत्यर्थत्वाभावाद्विधेयासंस्पर्शित्वादुद्देश्यगतत्वेनाविवक्षितत्वाच्च स्त्रिया अप्यधिकारः। स "न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरि"ति वासिष्ठाद्भर्त्रनुज्ञाताया अत एव सधवाया एव स्त्रिया अस्तीति नियम्यत इति चेदत्र ब्रूमः। न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरि"ति वासिष्ठं। अत्र भर्त्रनुज्ञा च सधवाया एव दृष्टार्थत्वात्। विधवायास्तु भर्त्रनुज्ञासत्त्वे सम्यगेव। तदभावे पितुः। तदभावे ज्ञातीनां वा अनुज्ञया दानप्रतिग्रहौ। अत एव "रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके। अभावे ज्ञातयस्तेषां न स्वातंत्र्यं क्वचित्स्त्रिया" इति याज्ञवल्क्येनावस्थाविशेष एव

स्त्रियाः पुत्रप्रतिनिधिकरणेऽधिकारो नास्तीति निराकरणं

भर्तुः पारतंत्र्यमुक्तं। कात्यायनेनापि "नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा। विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदेहिकमि"त्यवस्था-विशेष एव पितृभर्त्राद्यनुज्ञोक्ता। अतो यस्यामवस्थायां भर्त्रनुज्ञा प्राप्ता सैवात्रानूद्यते। नत्वपूर्वा विधीयते। अतो विधवाया भर्तुराज्ञां विनाऽप्यधिकार इति व्यवहारमयूखादौ। एवं सति भर्तृपदस्योप-लक्षणत्वापत्तिः स्यादिति। स्यादेवं। तां च स्वीकुर्मः। लोकश्रु-त्याऽपुत्रतयाऽवस्थाने महादोषश्रवणेनोपलक्षणत्वस्येष्टत्वात्। ततश्च भर्त्रनुज्ञासत्त्वे सधवाया भर्त्रनुज्ञासत्त्वासत्त्वयोश्च विधवाया अपि स्त्रिया अधिकारो भवत्येव निष्कंटकः। न च स्त्रीशूद्रयोः पुत्रप्रति-ग्रहांगमंत्रपाठहोमयोरधिकाराभावात्पुत्रप्रतिग्रहेऽप्यनधिकारो वाच्यः। विप्रद्वारांऽगानुष्ठानेन कर्तव्ये पुत्रप्रतिग्रहे स्त्रीशूद्रावप्यधिकृतौ। "उपवासो व्रतं होमस्तीर्थस्नानजपादिकं। विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलमि"ति पराशरोक्तेः। ननु "दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः। ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेदि"ति तस्यैव पराशरस्योक्तेः शूद्रकर्तृकहोमस्य विप्रद्वारा करणे कर्तुः पातित्यमिति चेन्न। दक्षिणां गृहीत्वा होमकरणे पातित्यं न त्वनादाय दक्षिणां होमकरणे पातित्यमिति धार्मिकाणां घण्टाघोषः।

पुत्रप्रतिग्रहकाल-निरूपणं

२१ अत्रिस्मृतौ "सदा" इति पदोपादानात् "वंध्याऽष्टमेऽधि-वेद्ये"तिवत्कालप्रतीक्षा न विधेयेति। ततः स्वदे-हस्य सापायत्वमाशंकमानः पुमान्वृद्धस्तरुणो वाऽपि पित्रानृण्यार्थं पुत्रप्रतिनिधिं यदा कर्तुमि-च्छेत्स तत्करणस्य काल इति पर्यवसितोऽर्थः।

२२ मन्वादिभिरुपदिष्टाः प्रागुक्ता एकादश प्रतिनिधयोऽपि सर्वे कलौ नाभ्यनुज्ञायंते। "अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैरि"ति बृहस्पतिवचनात्। "दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह" इति कलिवर्ज्यशास्त्रेण दत्तेतरपुत्रप्रतिग्रहप्रतिषेधाच्च। अत्र पुत्रकल्पलतायां विशेषः। प्रस्तुतशास्त्रवचनस्थं दत्तपदं रूढ्या दत्तकस्य वाचकमिति मत्वा दत्तकभिन्ना गौणाः पुत्राः कलौ वर्ज्या इति व्यवहारमयूखकारादयः। स्मृतिकौस्तुभकारादयस्तु दत्तपदं योगमर्यादया दानकर्मीभूतयोर्दत्तकस्वयंदत्तयोर्वाचकमिति मत्वा तदुभयभिन्नाः पुत्रप्रतिनिधयः कलौ वर्ज्या इत्याहुः। दत्तकमीमांसायां नंदपंडितास्तु दत्तकृत्रिमव्यतिरिक्तानां गौणपुत्राणां वर्ज्यत्वमाहुः। तथा चात्र लोकमान्यानां ग्रंथकृतां नानाविधमतदर्शनाज्जायमानसंदेहस्य निवृत्तये प्रमाणपरीक्षया सिद्धांतविनिर्णयोऽवश्यं कर्तव्यः। तथाह्युच्यते। कलिवर्ज्यप्रकरणस्थवचनगतेन दत्तशब्देन योगवृत्त्या दत्तकस्वयंदत्तावुभावप्युच्येते। उभयोरपि दानकर्मीभूतत्वरूपदत्तपदशक्यतावच्छेदकाक्रांतत्वाविशेषात्। असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायाच्च। "योगाद्रूढिर्बलियसी"ति न्यायस्य तु नात्रावसरः। शास्त्रेऽस्य न्यायस्य योगरूढशब्दोपस्थाप्यार्थनिर्णायकत्वाभ्युपगमात्। यथा जलजशब्दस्य योगमर्यादया कमलशैवालमीनाद्यर्थबोधकत्वे प्राप्ते प्रबलया रूढ्या कमलमात्रार्थवाचकत्वमनेन न्यायेनावधार्यते। "दत्तौरसेतरेषामि"त्यत्र पठितो दत्तशब्दस्तु न योगरूढः। तस्य दानकर्मीभूतगोहिरण्याद्यर्थेषु बहुशः

कलौ प्रतिनिधिसंकोचः

प्रयोगदर्शनात्। "संज्ञायां कन्नि"ति विहितकन्प्रत्ययान्तस्य दत्तकशब्दस्यैव पुत्रप्रतिनिधिविशेषरूपेऽर्थे योगरूढत्वात्। तथा च प्रकृतवचनेन दत्तकस्वयंदत्तभिन्नानामेव पुत्रप्रतिनिधीनां कलौ वर्ज्यत्वं सिध्यतीति कौस्तुभग्रंथोक्तः सिद्धान्तः सप्रमाणः सोपपत्तिकश्चेति ज्ञेयं। तथा "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुत" इति कलिधर्मप्रस्तावे पराशरस्मरणात् कृत्रिमोऽपि पुत्रः कलौ ग्राह्यः। कलिवर्ज्यप्रकरणस्थवचनगतं दत्तपदं पराशरवचनैकवाक्यतासंपादनाय कृत्रिमस्याप्युपलक्षणमित्यवश्यमभ्युपेयं। न चैवं क्षेत्रजोऽपि पुत्रः कलौ स्यादिति वाच्यं। क्षेत्रजोत्पत्तिसाधनीभूतस्य नियोगस्य कलावनेकस्मृतिवचनैर्निषिद्धत्वादेव क्षेत्रजनिषेधस्याप्यर्थत एव सिद्धेः। अस्तु तर्हि विहितप्रतिषिद्धत्वात्क्षेत्रजस्य कलौ विकल्प इति चेन्न। क्षेत्रजोत्पत्तिसाधनस्य नियोगस्य कलौ निषिद्धस्य लोकविद्विष्टस्याप्यंगीकारप्रसंगादिरूपानेकदोषदुष्टाया विकल्पकल्पनाया अयुक्तत्वात्। अत एव सत्यां गतौ विकल्पो नाभ्युपगन्तव्यस्तस्याष्टदोषदुष्टत्वादित्याहुर्मीमांसकाः। पराशरवचनस्थं क्षेत्रजपदं त्वौरसस्योपरंजकविशेषणतया स्वरूपलक्षणप्रकाशनेनापि संगतं भवति। तथाचोक्तमौरसलक्षणे मनुना "स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम्। तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकमि"ति। स्पष्टं चैतद्दत्तकमीमांसायां। किंचोदाहृतपराशरवचनस्थमपि दत्तपदं दत्तकस्वयंदत्तयोर्योगमर्यादया बोधकमेव। असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायसंचारस्यात्रापि तुल्यत्वात्। एवं च प्रमाणवचनादागतेन सोपपत्तिकविचारेण दत्तकः स्वयंदत्तः कृत्रिमश्चेति त्रयः पुत्राः कलौ शास्त्रेणाभ्यनुज्ञाता भवन्तीति सिद्धान्तनिर्णयः संपन्न इति।

२३ एतेषां प्रतिनिधीनां लक्षणानि याज्ञवल्क्यक्रमेणोच्यंते ।

लक्षणनिरूपणोपक्रमः

तत्रापि कलौ ग्राह्यान्पुत्रानुत्कृष्य लक्षयामः । अधुना कलौ निषिद्धानां लक्षणानि ।

२४ तत्र पुत्रिकापुत्रलक्षणं । तथाच मनुः—"अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकां । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरमि"ति । अपुत्रोऽविद्यमानपुत्रो यदस्यामपत्यं जायेत तन्मम श्राद्धाद्यौर्ध्वदैहिककरं स्यादिति कन्यादानकाले जामात्रा सह संप्रतिपत्तिरूपेण विधानेन दुहितरं पुत्रिकां कुर्यादिति कुल्लूकभट्टाः । वसिष्ठोऽपि "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृतां । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदि"ति संप्रतिपत्तिरूपेण विधानेन संविदेत्यर्थः । अयं च पुत्रिकापुत्रो द्व्यामुष्यायण एव संविदा कृतत्वात् । न केवलः । मन्वादिभिः पुत्रिकापुत्रकरणत्वस्याभिसंधिपूर्वकत्वेनोक्तत्वात् । ननु संविदं विना कृतः पुत्रिकापुत्रः केवलो भवितेति चेन्न । तस्य दौहित्रत्वेन मुख्यगौणपुत्रपत्नीदुहित्रभावे उक्तश्राद्धधनाद्यधिकारित्वस्यानवस्थाप्रसक्तेः । कलिवर्ज्ये कृतप्रतिषेधस्यासंगत्यापत्तेश्च । ततश्चायं द्व्यामुष्यायण एवेति सिद्धं । तथा च द्व्यामुष्यायणगणे जातूकर्ण्यवामरथ्यादयोऽत्रेः पुत्रिकापुत्राः । "अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा । विश्वामित्रात्रिगोत्राभ्यां नोद्वहेयुर्धनंजया" इत्युक्तेरिति ।

पुत्रिकापुत्रलक्षणं

२५ अथ क्षेत्रजः—"यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृत" इति मानवात् । प्रमीतस्य मृतस्य । क्लीबस्य नपुंसकस्य । व्याधितस्य प्रसवविरोधिव्याध्युपेतस्य । स्वधर्मेण घृता-

क्षेत्रजपुत्रलक्षणं

क्तादिनियोगधर्मेण । नियुक्तायां गुरुनियुक्तायां । अन्यजोऽन्यस्माज्जात उत्पन्नः पुत्रः क्षेत्रजः । मन्वादिभिः स्मृत इति । "तदलाभे नियुक्तायां क्षेत्रज" इति वासिष्ठात् । "क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेणवे"ति याज्ञवल्क्योक्तेश्च । स च नियोगविधिर्मनुनैव प्रदर्शितः । "देवराद्वा सपिंडाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचने"ति । अत्र मन्वर्थमुक्तावली—संतानाभावे स्त्रिया पत्यादिगुरुनियुक्तया देवरादन्यस्माद्वा सपिण्डाद्वक्ष्यमाणघृताक्तादिनियमवत्पुरुषगमनेनेष्टाः प्रजा उत्पादयितव्याः । ईप्सितेत्यभिधानमर्थात्कार्याक्षमपुत्रोत्पत्तौ पुनर्गमनार्थं । विधवायामित्यपत्योत्पादनयोग्यपत्यभावपरमिदं । जीवत्यपि पत्यौ अयोग्यपत्यादिगुरुनियुक्तो घृताक्तसर्वगात्रो मौनी रात्रावेकं पुत्रं जनयेन्न कथंचिद्द्वितीयमिति । अत्र नियोगविषये कन्याया विशेषमाह मनुः—"यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विंदेत देवरः ॥ यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रतां । मिथो भजेताप्रसवात्सकृत्सकृदृतावृतावि"ति । अत्र मिताक्षरा—यस्मै वाग्दत्ता कन्या स प्रतिग्रहमंतरेणैव तस्याः पतिरित्यस्मादेव वचनादवगम्यते । तस्मिन्प्रेते देवरस्तज्ज्येष्ठः कनिष्ठो वा निजः सोदरो विंदेत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीयानेन विधानेन घृताभ्यंगवाङ्नियमादिना शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसम्मितां मिथो रहसि आगर्भग्रहणात्प्रत्यृतुमेकवारं गच्छेत् । अयं च विवाहो वाचनिकः । घृताभ्यंगादिवाङ्नियमनगुरुनियुक्ताभिगमनांगमिति न देवरस्य भार्यात्वमुत्पादयति । अतस्तदुत्प-

न्नमपत्यं क्षेत्रस्वामिन एव भवति न देवरस्य । संविदा तूभयोरपीति मिताक्षरायां । स च क्षेत्रजो द्विविधः केवलो व्यामुष्यायणश्च । तथोक्तं मनुना—"फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी"ति । क्षेत्रिणां तथा बीजिनामित्युभयोः । फलं त्वनभिसंधाय यदस्यामुत्पत्स्यतेऽपत्यं तदावयोरित्यभिसंधिर्न कृतः तत्र प्रत्यक्षं निःसंदिग्धमेव क्षेत्रिणामर्थः । क्षेत्रिणामेव तदपत्यं यतो बीजाद्योनिर्गरीयसी बलियसीति । ततश्चायं केवलः क्षेत्रजः । व्यामुष्यायणस्तु "क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चे"ति मनुः । क्रियाभ्युपगमो नाम संविदंगीकरणाभिधानं । तस्मात् यदपत्यमत्र भविष्यति तदावयोरिति नियम्य एतत्क्षेत्रं स्वामिना बीजार्थं बीजवपनार्थं यद्बीजिने दीयते तस्यापत्यस्येह लोके बीजिक्षेत्रिक एव च बीजिक्षेत्रिणावुभावपि भागिनौ स्वामिनौ दृष्टौ । ततश्चायं व्यामुष्यायणः क्षेत्रजः । एवं च मनुवचनादभिसंधिरेव व्यामुष्यायणत्वे बीजमिति । तथा च व्यासादंबांऽबिकयोर्जनितौ पांडुधृतराष्ट्रौ केवलक्षेत्रजपुत्रौ । व्यामुष्यायणगणे व्यामुष्यायणक्षेत्रजपुत्रा विश्वामित्रान्तर्भूतकतगणान्तर्गताः शौंगशैशिरादयः । "भरद्वाजेन शुंगेन विश्वामित्रस्य शैशिरे । क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते शौंगशैशिरि"रित्युक्तेरिति ।

२६ अथ गूढजः "उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पज" इति मनुः । यस्य गृहेऽवस्थितायां भार्यायां पुत्र उत्पद्यते तज्जातीयोयं भवतीति ज्ञानेऽपि कस्मात्पुरुषाज्जातोऽसाविति न ज्ञायते । स गृहेऽप्रकाशमुत्पन्नस्तस्य पुत्रः स्याद्यदीयायां भार्यायां

गूढजपुत्रलक्षणं

जात इति कुल्लूकभट्टाः । याज्ञवल्क्यः—"गृहे प्रच्छन्न उत्पन्नो गूढजः स सुतः स्मृत" इति । अयं च "न च ज्ञायेत कस्य स" इत्यनेन ज्ञानस्य कारणत्वोक्तेः कस्यायमिति ज्ञानाभावे केवलः । ज्ञाने तु व्यामुष्यायणः । तथाहि—"गूढोत्पन्नो यदि ज्ञातस्तदा स्यात्तु द्वयोः सुतः । तत्रापि प्रायशो रेतःसेक्तुरेव सुतो भवेत्" इति । प्रायश इति बुधादौ तथा दर्शनादिति भावः । यदि न ज्ञानं तर्हि क्षेत्रपतेरेव सुतः प्रसिद्ध इति भावः । इति विबुधवल्लभनृसिंहविरचिते जातिविवेके ।

कानीनपुत्रलक्षणं

२७ अथ कानीनः । तथा च मनुः—"पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवमि"ति । रहोऽप्रकाशं । वोढुः परिणेतुः । शेषं स्पष्टम् । "कानीनः कन्यकाजातो मातामहसुतो मत" इति याज्ञवल्क्यः । वासिष्ठेऽपि "या पितुर्गृहेऽसंस्कृता कामादुत्पादयेन्मातामहस्य स पुत्रो भवतीत्याहुः । अथाप्युदाहरंति । अप्रत्ता दुहिता यस्य पुत्रं विन्दति तुल्यतः । पुत्री मातामहस्तेन पिण्डं दद्याद्धरेद्धनमि"ति । मनुना परिणेतुः पुत्रो भवतीत्युक्तं । याज्ञवल्क्यवसिष्ठाभ्यां मातामहस्य पुत्रो भवतीत्युक्तं । इत्युभयोरेकवाक्यतालाघवायायं कानीनः पुत्रो व्यामुष्यायणोऽभ्युपेय इति । तथा व्यासः कर्णश्चोभावपि कानीनौ व्यामुष्यायणौ च । व्यासादौ पाराशर्यत्वव्यवहाराच्चेति ।

पौनर्भवपुत्रलक्षणं

२८ अथ पौनर्भवः । तथा च मनुः—"या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यत" इति । पुनर्भूत्वा पुनर्भार्या

यमुत्पादयेत्स उत्पादकस्य पौनर्भवः पुत्र उच्यत इति मन्वर्थमुक्तावल्यां। याज्ञवल्क्योऽपि "अक्षतायां क्षतायां वा जातः पौनर्भवः सुत" इति। स चायं पौनर्भवः पुत्रः केवल एवेति। पुनर्भूसंस्कारस्त्वन्यत्र ज्ञेयः।

क्रीतकपुत्रलक्षणं

२९ अथ क्रीतकः। तथोक्तं मनुना "क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा" इति। सदृशोऽसदृशोऽपि वेति। क्रेतुर्गुणैस्तुल्यो हीनो वा भवेत्। न तत्र जातितः सादृश्यवैसादृश्ये। "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरि"ति याज्ञवल्क्येन सर्वेषामेव पुत्राणां सजातीयत्वाभिधानात्। मानवेऽपि क्रीतव्यतिरिक्ताः सर्वे पुत्राः सजातीया वोद्धव्या इति कुल्लूकभट्टाः। सदृशोऽसदृशः सवर्णोऽधमवर्णोवेत्यर्थइतिसर्वज्ञनारायणः। सदृशोऽसदृश इति गुणवानगुणवान्नतु विजातीयः। "सजातीयेष्वयं प्रोक्तस्तनयेषु विधिर्मये"ति याज्ञवल्क्योक्तेरिति राघवानंदः। उपक्रमोपसंहारलिंगपर्यालोचनया राघवानंदोक्तिरेव वस्तुगतियुक्तेति भाति। याज्ञवल्क्योऽपि "क्रीतश्च ताभ्यां विक्रीत" इति। अयं च क्रीतकः पुत्रः संवित्सत्त्वे द्व्यामुष्यायणः। संविदभावे केवलः। तथा च द्व्यामुष्यायणगणे—संस्कृतयः पूतिमाषाश्चांगिरसः सुताः। वासिष्ठैः क्रयक्रीता इति केचित्। वसिष्ठपुत्रस्य शक्तेर्दत्तपुत्रा इत्यन्ये। इति निर्णयसिंधुटीकायां।

सहोढपुत्रलक्षणं

३० अथ सहोढः। तथा च मनुः—"या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते" इति। ज्ञाता अज्ञातावा गर्भिणीत्वेनेत्यर्थः। कन्यायां संस्क्रियमाणायां सत्यां तत्सहगर्भस्या-

प्यनायासेन संस्कृतभवनात्सहोढ इति व्यवहारः । याज्ञवल्क्योऽपि "गर्भे विन्नः सहोढज" इति । वासिष्ठेऽपि "या गर्भिणी संस्क्रियते तस्यां जातः सहोढः पुत्रो भवती"ति । तथा चायं सहोढः पुत्रो द्विविधः । अज्ञातगर्भायाः परिणीतायाः पुत्रः केवलः सहोढः । ज्ञातगर्भायाः परिणीतायाः पुत्रो द्व्यामुष्यायणः सहोढः । तथाहि— "क्षेत्रजः पुत्रिकापुत्रः सहोढश्चेति ते त्रयः । द्व्यामुष्यायणतां यांति द्वयोरपि सुता मता" इति विबुधवल्लभनृसिंहविरचिते जातिविवेके द्वितीयपरिच्छेदे पुत्रत्वविचारे ।

अपविद्धपुत्रलक्षणं

३१ अथापविद्धः । तथा च मनुः—"मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यत" इति । बहुप्रजतया भरणासमर्थेनात्यन्तदुर्गत्या केनचिद्वा दोषयोगेन मातापितृभक्तिहीनत्वादिना । न पुनः प्रत्यक्षत्वेन । तस्य न कचिदेव पुत्रकार्येऽधिकार इति दर्शितं । अन्यत्वमप्यन्यतरेणोत्सर्गः । परिग्रहः पुत्रबुद्ध्या न तु तज्जीवितेच्छया इति मेधातिथिः । याज्ञवल्क्योऽपि "उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुत" इति । अयं च केवलः । मातापितृभ्यां त्यक्तत्वात्तस्योपरि स्वत्वनिवृत्तेरर्थसिद्धत्वादिति । कलिनिषिद्धा अपि पुत्रा वक्ष्यमाणशास्त्रीयविचारपरिस्फुटतायै वर्णिताः ।

दत्तकपुत्रलक्षणं

३२ अथ दत्तकः । तथा च मनुः—"माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः" इति । माता माङ्माने धातुः । माति गर्भोऽस्यामिति माता जनकत्वोत्वावच्छिन्ना यथा यज्ञदत्तस्य

मातेति। पिता पा रक्षणे धातुः। दौहृदादिप्रदानेन यः पाति स पिता जनकपुंस्त्वावच्छिन्नो यथा यज्ञदत्तस्य पितेति। मातृत्वं-पितृत्वं च जन्यपुंस्त्वरूपपुत्रनिमित्तकं "शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तक" इति वासिष्ठस्मरणात्। मात्रादिग्रहणं पालकाभ्यां पालितस्य दत्तकस्यान्यस्मै दानवारणार्थं। तेन दत्तकः पुनर्दत्तको न भवतीति। पितामहादेर्दातृत्वस्य वारणार्थं चेति निर्णयसिंधुटीकायां। वासिष्ठस्मरणमपि "शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत" इति। ततश्च मातापितरावेवौरसपुत्रदानेऽधिकारिणौ नान्यः कश्चनेति। वेति विभाषार्थो निपातः। मात्रभावे पितैव दद्यात्। पित्रभावे मातैव। उभयसत्त्वे तूभावपि। इति मदनव्यवहारमयूखप्रभृतिषु। दद्यातां। दा दाने धातुः। विधौ लिङ् दानेनेष्टं भावयेतामित्यर्थः। दानं च स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं दानमिति। यं उत्तरार्धगततत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयकउद्देश्यो यत्पदार्थः। अद्भिः। विधिनोदकपूर्वं दत्तमित्यर्थः। इदं वासिष्ठाद्युक्तविध्युपलक्षणं। तत्र बह्वृचानां शौनकोक्त एव विधिरिति निर्णयसिंधुटीकायां। तैत्तिरीयाणां बौधायनोक्त एव विधिरिति दत्तकमीमांसायां। पारिशेष्यादन्येषां वासिष्ठ एव विधिरिति पर्यवस्यति। शौनकीयवासिष्ठकल्पयोः शाखाभेदेन शक्ताशक्तभेदेन वा व्यवस्थेति वीरमित्रोदये। इति विधिविधानव्यवस्था। पुत्रं। पुन्नामनरकात्त्रायमाणं। तथोक्तं मनुना—'पुन्नाम्नो नरकाद्यस्मात्त्रा-

दत्तकः पुनर्दत्तको न भवति

पितामहादेर्दातृत्वापाकरणं

विधिविधानव्यवस्था

यत" इत्यादिना । अत्रायं विशेषः । दातुरेकपुत्रत्वे स न देयः । प्रतिग्रहीत्राऽपि स न गृहीतव्यः । "नत्वेकं

एकः पुत्रो न देयः

पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामि"ति वासिष्ठात् । विज्ञानेश्वरोऽप्येवं । द्व्यामुष्यायणे तु । एकोऽपि पुत्रो दानप्रतिग्रहकर्मीभूतो भवति । "नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषा"मिति वासिष्ठोक्तनिषेधस्तु नात्र प्रविशति । तस्य केवलदत्रिमे सावकाशत्वात् । द्व्यामुष्यायणत्वेन पुत्रीकरणे "स हि संतानाय सर्वेषा"मिति हेतुवाक्यबोधितस्य जनकवंशोच्छेदस्याभावाच्च । केवलद्व्यामुष्यायणप्रकारस्त्वग्रे वक्ष्यते ।

द्व्यामुष्यायणे त्वेकोऽपि देयः

तथा अनेकपुत्रसत्त्वे ज्येष्ठः पुत्रो देयः प्रतिगृहीतव्यश्च । ज्येष्ठदाने निषेधकताया अभावात् । ननु "ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात्सर्वमर्हती"ति मानवीयेन वचसा ज्येष्ठो निषिध्यत इति चेन्न । मानवीयस्य "पुत्रीभवती" त्यनेन पुत्रित्वमात्रोक्त्या ऋणापाकरणोक्तिमात्रपरत्वाच्च । अतश्च "पितॄणामनृणश्चैव स तस्मात्सर्वमर्हती"-त्युत्तरार्धं संगच्छते । सर्वं द्रव्यमिति व्यवहारमयूखे । एतेन विद्यमानभ्रातृको ज्येष्ठपुत्रोऽपि दत्तको भवतीति फलितं ॥ पुत्रपदं चौरसपरं । तेन न दत्तकादीनां पुत्रीकरणापत्तिः । इति—निर्णयसिंधुटीकायां ॥ आपदि । प्रतिग्रहीतुः पुत्राभावरूपायामापदीत्यपरार्कः । राघवानंदश्च । यद्वा दातुर्दुर्भिक्षादाविति राघवानंदो दत्तकमीमांसा च । आपद्ग्रहणादनापदि न देयः । आपन्निमित्तमात्रं । नचापदो निमित्तत्वेन तस्यां

ज्येष्ठपुत्रोऽपि देयः

तद्दाने प्रत्यवायापत्तिः । एतद्वचनस्य संज्ञासंज्ञिसंबधमात्रबोधकत्वेन दानाबोधकत्वादिति- व्यवहारमयूखे निर्णयसिंधुटीकायां च । सदृशं । प्रतिगृहीतुः समानजातीयं । यत्तु गुणैः सदृशं । ततश्च ब्राह्मणादेः क्षत्रियादिरपि दत्तको भवती"ति मेधातिथिः प्राह तन्न । याज्ञवल्क्येन "औरसो धर्मपत्नीज" इति द्वादशपुत्रानुपक्रम्य "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरि" त्युपसंहारात् । विज्ञानेश्वरोप्येवमिति व्यवहारमयूखे । तथाच सजातीय एव दत्रिमो भवतीति सिद्धं । प्रीतिसंयुक्तं । इदं देयपुत्रविशेषणं । न बलोपाधिक्रतमिति राघवानंदः । "विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः । दाराः पुत्राश्चेति वचना"दिति निर्णयसिंधुटीकायां । सः । पूर्वदलगतयत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयको विधेयस्तत्पदार्थः । ज्ञेयः । ज्ञानविषयः करणीयः । दत्रिमः । दा दाने धातुः । भावार्थे ड्वितक्त्रिरिति क्त्रिः प्रत्ययः । ततः क्त्रेर्मम् नित्यमिति निवृत्त्यर्थे मम्प्रत्ययः । तेनायमर्थः । दानेन जनकगोत्रान्निवृत्तोऽपि जनकगोत्रसंबंधकार्यमात्रेऽपि निवृत्त इति दत्रिमशब्दार्थः । मयूखकारप्रभृतिविदुषां दानप्रतिग्रहसंकल्पोल्लेखोऽपि दत्रिमशब्दार्थानुसार्येव । अस्मदादीनामस्य च पुत्रस्य परस्परं वर्तमानपितृपुत्रादितत्तत्संबंधनिमित्तकतत्तत्कार्यनिवृत्तये प्रतिगृहीत्रादीनामस्य च परस्परं पितृपुत्रादितत्तत्संबंधनिमित्तकतत्तत्कार्यप्रवृत्तये पुत्रदानं करिष्ये इति दातुरुल्लेखः । गृहीष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रादितत्तत्संबंधनिमित्तकतत्तत्कार्यनिवृत्तये अस्मदादीनामस्य च पुत्रस्य परस्परं पितृपुत्रादितत्तत्संबंधनिमित्तकतत्तत्कार्यप्रवृत्तये च पुत्रं प्रतिग्रहीष्ये इति प्रतिग्रहीतुरुल्लेखः । सुतः । पुंस्त्वविशिष्टापत्यं

पुत्रः । "क्षेत्रजादीन् सुतानेतानिति" मनुना दत्तकस्य क्रियालोप-भयेन औरसप्रतिनिधित्वोक्तेरौरस इव तत्प्रतिनिधिष्वपि पुंस्त्वविवक्षाया आवश्यकत्वात् । अन्यथा औरसेऽपि पुंस्त्वाविवक्षणापत्त्या

कन्यादत्तका न भवति

औरसाभावे कन्यायाश्च दत्तकादिभ्यः प्रथममौर्ध्वदेहिकाद्यधिकारप्रसंगेन बहुव्याकोपः स्यादिति । ततश्च पुंस्त्वविशिष्टापत्यपुत्रलाभात्क्लीबापत्यमिव स्त्र्यपत्यं कन्या दत्त्रिमा न भवत्येवेति । अत्र क्लीबमित्यंगहीनानामुपलक्षणं । तेषामप्यद्रव्यत्वात् । व्यवहारमयूखे निर्णयसिंधुटीकायामप्येवं । इतिहासपुराणादौ कुंत्या दत्तकोक्तिस्तु विधिं विनैव । "आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकां । धर्म्येण विधिना दानमसगोत्रेऽपि युज्यते" इति । अत्र सुवर्णशब्दस्य प्रलोभनोपायपरत्वात् । ऋष्युक्तमेव कर्तव्यं न तु तत्कृतमाचरेदिति न्यायाच्च दत्त्रिमे पुत्रत्वं प्रतिग्रहहोमसंस्कारजन्यादृष्टजन्यमेव । नत्वौ-

दत्त्रिमे पुत्रत्वं तु शास्त्रैकगम्यमेव

रसवज्जन्यपुंस्त्वरूपं । तथाच वीरमित्रोदयादौ । न दत्त्रिमे स्त्रीपुरुषसंबंधजन्यपुत्रत्ववल्लौकिकं पुत्रत्वं । किंतु शास्त्रैकसमधिगम्यहोमसंस्कारादिजन्यत्वेन भार्यात्वादिवदलौकिकसंस्कारविशेषपर्यवसन्नं तत् । यथा प्रतिग्रहादिना स्वत्वास्पदीभूतायां योषिति पाणिग्रहणादिना भार्यात्वं । तथा प्रकृतेऽपि प्रतिग्रहादिना स्वीकृते बाले होमसंस्कारादिभिः पुत्रत्वं । तथाच होमसंस्काराद्यभावे न पुत्रत्वमिति वीरमित्रोदये । दत्तके तु "पुत्रं प्रतिग्रहीष्यन्नित्यादि" पुत्रप्रतिग्रहविधौ पुत्रमिति द्वितीयावशात् पुत्रस्य भाव्यत्वेन जन्यपुंस्त्वरूपपुत्रत्वस्य भाव्यत्वासंभवाददृष्टं भाव्यमंगीकार्यं । तदेव च श्राद्धादिसकलपुत्र-

कार्यप्रयोजकं । तथा दत्रिमे पितृश्राद्धाद्यधिकारित्वावच्छेदकमदृष्ट-मेव । औरसे तु जन्यपुंस्त्वमेवेति प्रसिद्धमिति निर्णयसिंधुटीकायां ।

३३ याज्ञवल्क्योऽपि । "दद्यान्माता पिता वा यं स पुत्रो दत्रिमः स्मृतः" इति । वासिष्ठेऽपि । "दत्तको द्वितीयो यं मातापितरौ दद्याता" मिति । अयं च दत्तकपुत्रः केवलो द्व्यामुष्यायणश्च । उभयविधशास्त्रात् ।

दत्तकपुत्रो द्विविधः

तथाहि । तत्रोभयोरावयोरसौ पुत्र इति संविदं विना यो दीयते स केवलः । केवलोऽद्व्यामुष्यायणः शुद्धः एकगोत्रः इति चानर्थांतरं । यस्तु संविदा दीयते स द्व्यामुष्यायणः । द्विगोत्र इति च नार्थांतरं । अमुष्यापत्यमामुष्यायणः । नडादित्वात्फक् । पुत्रवचनोयमामुष्यायणशब्दः । शक्तिस्वभावात् । द्वयोरामुष्यायणो द्व्यामुष्यायण इति तदर्थः । एवंविधस्वार्थस्यान्यथानुपपत्त्या उभयोरावयोरसौ पुत्र इत्यर्थसिद्ध्या संविदा पुत्रीकृतानेव दत्तकादीन् द्व्यामुष्यायणशब्दोऽभिधत्ते । द्व्यामुष्यायणत्वे निमित्तं तु संविदेव । तथाच "अपुत्रेण परक्षेत्रे" इत्यत्र मिताक्षरायां यथोक्तं मनुना । "क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चे"ति । क्रियाभ्युपगमादित्यत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदंगीकरणादिति । तत्रैव तदग्रे । "फलं त्वनभिसंधाय क्षेत्रिणा बीजिना तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी"ति । फलं त्वनभिसंधायेति । अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसंधायेति विज्ञानेश्वरेणोक्तत्वात् । प्रतिग्रही तु द्व्यामुष्यायणज्ञानार्थत्वेन दृष्टार्थत्वादिति व्यवहारमयूखे भट्टनीलकंठोक्तेश्च । तुल्यन्यायान्महर्षिकात्यायनलौगाक्षिसूत्रयोरपि । "अथ ये दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेण द्व्यार्षेया जातास्ते

व्यामुष्यायणा भवंती"त्यत्र परिग्रहशब्दार्थो व्यामुष्यायणोपक्रमात् उभयोरावयोरसौ पुत्र इति संविदंगीकरणमिति । तत्र केवले प्रमाणं मनुवचनं । पुरुषार्थचिंतामणौ संस्कारकांडे । अव्यामुष्यायणदत्तकसिद्धौ किं मानमिति चेदुच्यते । "एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनं" "श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हती" त्यग्रिमवाक्येनैवौरसाभावे दत्तकादीनां रिक्थसंबंधे सिद्धे औरसपुत्रे सत्यपि विद्याविनयादिगुणयुक्तस्य निवृत्तजनकगोत्रस्य संप्राप्तप्रतिग्रहीतृगोत्रस्य रिक्थहारित्वविधायकस्य प्राक्पठितस्य "उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः । स हरेतैव तद्रिक्थं संप्राप्तोप्यन्यगोत्रत" इति मनुवचनस्यैव प्रमाणत्वात् । अव्यामुष्यायणदत्तकास्वीकारे एतद्वैयर्थ्यस्य स्पष्टत्वादिति । यद्यपि केवलदत्तकः क्वापि शब्देन नोक्तः । तथापि पूर्वोक्तमनुवचनेन जनकादीनां संबंधमात्रनिवृत्तेरुक्तत्वात् व्यामुष्यायणे तदभावोऽर्थात्सिद्ध्यत्येव । अपिच प्रवराध्याये । "व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः । गोत्रद्वयेप्यनुद्वाह्याः शौंगशैशिरयो यथा" इत्यनेन गोत्रद्वयमपि व्यामुष्यायणस्योक्तं । मानवीयेन च जनकगोत्रनिवृत्तिरुक्तैवेति । अयं च विरोधः केवलव्यामुष्यायणभेदेनैव परिहरणीयः । तेन सिद्ध्यत्येव केवलोऽपि दत्तक इति व्यवहारमयूखे । व्यामुष्यायणे प्रमाणं महर्षिः कात्यायनो लौगाक्षिश्च । "अथ ये दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेण व्यार्षेया जातास्ते व्यामुष्यायणा भवंति । यथैतत् । शौंगशैशिरीणां भरद्वाजो...नां लौगाक्षीणां च । यानि चान्यान्येवं समुत्पत्तीनि कुलानि भवंती"ति ॥ व्यार्षेयाः । ऋषिः प्रवरः । द्वयोर्जनकपालकयोः पित्रोः प्रवरसंबंधिन

इत्यर्थः । निर्णयसिंधुटीकायां तु निर्णयसिंधुकारधृत "अनार्षेया" इति पाठमादृत्य ऋषिः प्रवरः । जनकप्रवरगोत्रहीना इति यावत् । व्यार्षेया इति पाठो युक्त इति व्याख्यातं । अत्र केषांचित्पंडितंमन्यानामयमाशयः । केवलदत्त्रिमस्त्वविधानान्नास्त्येव । आवयोरसाविति संविदश्च विधानाभावात् । तां विना गृहीतोऽपि व्यामुष्यायण एवेति । तद्विषये विशिष्टतया व्यवहारमयूखे निर्णयः कृतोऽस्ति । स यथा । दत्तकस्तु द्विविधः । केवलो व्यामुष्यायणश्च । तत्र संविदं विना दत्त आद्यः । आवयोरसाविति संविदा दत्तस्त्वंत्य इति । तत्रैवाग्रे । केचित्तु केवलदत्तकस्याविधानात् स नास्त्येव । आवयोरसाविति संविदश्च विधानाभावात्तां विना गृहीतोऽपि व्यामुष्यायण एवेत्याहुः । तच्चिंत्यं । इत्यादितत्तत एव विज्ञेयं जिज्ञासुभिः । नेह विस्तरभियोद्धृतं । एवंसिद्धे केवले व्यामुष्यायणे चावयोरसाविति संविदपि सिध्यति । व्यवहारमयूखे केवलव्यामुष्यायणदत्तकयोर्दानप्रतिग्रहसंकल्पावपि निबंद्धृभिस्तत्तच्छब्दानुसारिणावेवाभिहितौ । तत्र केवलदत्तकस्य त्वनुपदमेवोक्तः । व्यामुष्यायणदत्तकस्य तु निर्णयसिंधुटीकायामुद्धृतः । स यथा । अस्मदादीनामस्य च पुत्रस्य परस्परं पितृपुत्रभावादिसंबंधसत्त्वेऽपि अस्य प्रतिग्रहीतुश्च परस्परं पितृपुत्रभावादिसंबंधसिद्धये इमं पुत्रं दास्यामीति दातुरुल्लेखः । एवं । अस्य पुत्रस्य जनकादीनां च परस्परं पितृपुत्रभावादिसंबंधसत्त्वेऽपि अस्य पुत्रस्य अस्मदादीनां च परस्परं पितृपुत्रभावादिसंबंधसिध्यर्थमिमं पुत्रं प्रतिग्रहीष्ये इति प्रतिग्रहीतुरुल्लेख इति । ततश्चायं दत्तकपुत्रः केवलो व्यामुष्यायणश्चेति फलितं ॥

३४ अथ कृत्रिमः । तथाच मनुः । "सदृशं तु प्रकुर्याद्यं गुण-

दोषविचक्षणं। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिम" इति। तु पुनः। यं पुत्रं। सदृशं समानजातीयं। गुणदोषविचक्षणं। पारलौकिकश्राद्धादिकरणाकरणाभ्यां गुणदोषौ भवत इत्येवमादिज्ञं। पुत्रगुणैश्च युक्तं। मातापित्रोराराधनादिगुणयुक्तं। पुत्रं कुर्यात्। स कृत्रिमाख्यः पुत्रो वाच्य इति कुल्लूकभट्टाः। इदमत्र विवेक्तव्यं। जीवन्मातापितृको न कृत्रिमपुत्रो भवितुमर्हति पराधीनत्वात्। ननु ताभ्यां दत्ते सति तु भवेदर्ह इति चेन्न। स दत्तको भवतीति धर्मशास्त्रप्रसिद्धेः। ततश्च प्रमीतमातापितृक एव कृत्रिमपुत्रो भवितुं योग्यः। अतएव याज्ञवल्कीयं। "कृत्रिमः स्यात्स्वयंकृत" इति कृत्रिमपुत्रलक्षणं। कृत्रिमस्तु स्वयं पुत्रार्थिना धनक्षेत्रादिप्रदर्शनादिप्रलोभनैः पुत्रीकृतो मातापितृविहीनः। तत्सद्भावे परतंत्रत्वान्न पुत्रीकरणं भवतीति व्याकृत्य विज्ञानेश्वरेणापि एषोऽर्थः सममानि। अयमपि कृत्रिमपुत्रः केवलो व्यामुष्यायणश्च। संविदभावे केवलः। संवित्सत्त्वे तु व्यामुष्यायणः। संविच्चात्र स्वकर्तृका। तस्या दृष्टार्थत्वेन शक्नोति च स्वयं संविदं कर्तुमिति भावः॥

कृत्रिमपुत्रलक्षणं

३८ अथ स्वयंदत्तः। तथाच मनुः। "मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृत" इति। अकारणात्पातित्यादित्यागकारणेष्वसत्सु। स्पर्शयेद्दद्यात्। तच्चोदकपूर्वमत्र। कृत्रिमे तु तेन परिग्रहमात्रं। अस्य सांतत्येनेति विशेषः। इति सर्वज्ञनारायणः। याज्ञवल्क्योऽपि। "स्वयंदत्तात्मा तु स्वयंदत्तः" इति। वासिष्ठेऽपि। स्वयमुपागतश्चतुर्थस्तच्छुनःशेपेन व्याख्यात" मित्यादीनि। अयमपि स्वयंदत्तपुत्रः केवलो व्यामुष्यायणश्च। संविदभावे

स्वयंदत्तपुत्रलक्षणं

स्वयंदत्तात्मा केवलः । दत्तकवदत्रापि निरुपाधिकदानस्य समानत्वात् । विशेषानवगमाच्च । संविदा स्वयंदत्तात्मा तु द्व्यामुष्यायणः । यद्ययं स्वदाने स्वयं समर्थो भवति तर्हि संविदं कर्तुं समर्थो भवेदेवेति न कश्चन दोषः । प्रागप्युक्तं । स्वकर्तृका संवित्संभवतीति । तथाच । द्व्यामुष्यायणगणे देवरातादयः स्वयंदत्ता इति ।

३६ अथ कलावभ्यनुज्ञातानां पुत्रप्रतिनिधीनां याज्ञवल्कीयक्रमानुगं केवलद्व्यामुष्यायणादिभेदप्रदर्शकं

(१) कोष्टकम्

| अनुक्रमांकाः | निश्चितक्रमांकाः | नामानि. | केवलाः | द्व्यामुष्यायणाः |
|---|---|---|---|---|
| १ | २ | पुत्रिकापुत्रः | ० | २ |
| २ | ३ | क्षेजत्रः | १ | २ |
| ३ | ४ | गूढजः | १ | २ |
| ४ | ५ | कानीनः | ० | २ |
| ५ | ६ | पौनर्भवः | १ | ० |
| ६ | ८ | क्रीतकः | १ | २ |
| ७ | ११ | सहोढजः | १ | २ |
| ८ | १२ | अपविद्धः | १ | ० |
| ० | ० | ० | ६ | ६ |

अथ कलावभ्यनुज्ञातानां पुत्रतत्प्रतिनिधीनां च याज्ञवल्कीयक्रमानुगं केवलव्यामुष्यायणादिभेदप्रदर्शकं

(२) कोष्टकम्

| अनुक्रमांकाः | निश्चितक्रमांकाः | नामानि. | केवलाः | व्यामुष्यायणाः |
|---|---|---|---|---|
| ९ | १ | औरसः | मुख्यः ० | ० |
| १० | ७ | दत्तकः | १ | २ |
| ११ | ९ | कृत्रिमः | १ | २ |
| १२ | १० | स्वयंदत्तः | १ | २ |
| ० | ० | ० | ३ | ३ |

पुत्रप्रतिनिधयः सजातीया एव ।

३७ एतच्च पुत्रीकरणं सजातीयेष्वेव करणीयं । यद्यपि तत्तल्लक्षणव्याख्यानावसरे कैश्चिट्टीकाकृद्भिः सदृशादिशब्दा गुणपरतया व्याख्याय अन्यजातीया अपि पुत्रप्रतिनिधयो भवंतीत्यापातत उक्तं । तथापि तत्सर्वमनादृत्य सजातीया एव पुत्रप्रतिनिधयो भवंतीति नियमोऽभ्युपेयः । "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधि"रिति योगीश्वरेण विशेषविधानात् ।

३८ ते च दत्रिमादयः कीदृशा ग्राह्या अग्राह्याश्चेति जिज्ञासायां । "सदृशः प्रतिनिधिः"रिति षाष्ठन्यायात्सदृशा एव ।

दत्त्रिमादीनां आज्ञाग्राह्यजिज्ञासा। तत्रादौ सादृश्यलक्षणं।

तच्च सादृश्यं पुत्रकल्पलतायामभिहितं। "न्यूनवयस्त्वे सति पूज्यत्वप्रयोजकसापिंड्यसंबंधानाश्रयत्वस्वरूप"मिति । पित्रपेक्षया पुत्रो न्यूनवयाः पूज्यत्वप्रयोजकसापिंड्यसंबंधानाश्रयश्च । तथा प्रतिग्रहीत्रपेक्षया प्रतिग्राह्यो भ्रातृपुत्रसपिंडसगोत्रादिः पुत्रो वा न्यूनवयाः पूज्यत्वप्रयोजकसापिंड्यसंबंधानाश्रयश्चेति **भवति लक्षणसमन्वयः।** पूज्यत्वप्रयोजकसापिंड्यसंबंधानाश्रयाणामपि अधिकवयसां भ्रातृपुत्रादीनां निरासाय सत्यंतं दलं । न्यूनवयसामपि पितृव्यत्वमातुलत्वादिना पूज्यत्वप्रयोजकसापिंड्यसंबंधवतां पितृव्यमातुलादीनां निरासाय विशेष्यं दलमिति बोध्यमिति शास्त्रीयमेवेदं पुत्रलक्षणं । "पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिम"इति कृत्रिमपुत्रप्रतिनिधिलक्षणविधायके मनुवचने पुत्रपदस्य पुत्रगुणैर्युक्तमिति विशेषणोपादानात् । पुत्रगुणाः पित्रोराराधनादयः । कुल्लूकभट्टप्रभृतिभिरित्थमेव व्याकृतत्वात् । न्यूनवयस्कत्वं त्वर्थसिद्धमेवेति । **यत्तु दत्तकमीमांसायां नंदपंडितोक्तं।** "नियोगादिना स्वयमुत्पादनयोग्यत्वं पुत्रसादृश्यलक्षणं" । अत्रादिना विवाहयोग्यत्वमिति च । एतद्धि लक्षणं शास्त्रासंमतं । **तथाहि।** परस्त्रियां पुत्रोत्पादनार्थं गुर्वनुज्ञानियोगशब्दार्थः क्षेत्रजपुत्रे शास्त्रप्रसिद्धः । पाणिगृहीत्यां पुत्रोत्पादनार्थं तु न तथा । ततश्च वैसादृश्येन पुत्रसादृश्यासंभव एव । नच नियोगादिनेत्यत्रादिपदेन "ऋतौ भार्यामुपेया"दित्यस्य विधेर्मीमांसकैर्नियमविध्यंगीकारेण चोदनाया असंभवात् । किंच । स्त्रियां स्त्रिया नियोगस्य विवाहयोग्यत्वस्य प्रतिषिद्धत्वतियो-

गस्य वा असंभवात् स्त्रीकर्तृकपुत्रप्रतिग्रहस्याशास्त्रीयत्वं प्रसज्येत । नचेष्टापत्तिः । सधवानां स्त्रीणां भर्त्रनुज्ञया विधवानां तां विनाऽपि पुत्रकर्मकदाने प्रतिग्रहे चाधिकारस्य शास्त्रसिद्धत्वात् । ननु भर्त्रनुज्ञया स्त्रीणां यः पुत्रप्रतिग्रहाधिकारः स भर्त्रनुज्ञामूलकत्वेन भर्त्रर्थं एव । न स्वार्थं । **अतो** विवाहादिना रतियोगोऽवश्यं वाच्य इति **चेन्न** । "सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनु"रिति **मनुना** स्त्रीणामपि क्रियालोपभयात्स्वातंत्र्येण सपत्नीपुत्रस्य पुत्रीकरणाभ्यनुज्ञानात् । अन्यथा सपत्नीपुत्रस्य स्वभर्तुरपि पुत्रत्वेन तत्पुत्रीकरणाभ्यनुज्ञावचनस्य वैयर्थ्यापत्तेश्चेति । **अत एव भट्टरामकृष्णैर्जीवत्पितृकनिर्णये** सपत्नमातरि व्यपेतायां सपत्नीपुत्रस्य द्वादशविधपुत्राभावे अंत्येष्टिक्रियाकरणे अधिकारमात्रमुक्तं । न क्षौरादिकं । अत एव च सर्वे निबंधारः सपत्नमातुरतिक्रांताशौचं त्रिरात्रमेव जगुर्न जननीवद्दशरात्रमिति दिक् । विस्तरस्तु **शुक्लयजुर्वेदीयकर्मकांडप्रदीपे बोध्यः । अत्रेदमवश्यं ध्येयं** । इदं हि लक्षणं दत्तककृत्रिमस्वयंदत्तपुत्रान् लक्ष्यीकरोति । नेतरान् । तेषूत्पत्तेर्विद्यमानत्वात् । तेन तद्विषये ग्राह्याग्राह्यविचारानवसरः ।

ग्राह्याग्राह्यविवेचनं ।

३९ **तत्र वर्णकांतरमाह** । "ब्राह्मणानां सपिंडेषु कर्तव्यः पुत्रसंग्रहः । तदभावेऽसपिंडो वा अन्यत्र तु न कारये"**दिति शौनकीये**"सपिंडेष्वि"ति सामान्यश्रवणे"उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः । स हरेतैव तद्रिक्थं संप्राप्तोप्यन्यगोत्रतः । गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिंडो व्यपैति

ददतः स्वधा"इति मनुवचनाभ्यां सगोत्रासगोत्रसपिंडासपिंडबोधनात्। **द्विविधाः सपिंडाः** सगोत्रा भिन्नगोत्राश्च क्रमेण सप्तपंचपुरुषावधिकाः। तत्र सगोत्रतया स्वल्पपुरुषांतरतया च प्रथमं सगोत्रसपिंडेषु पुत्रप्रतिनिधिः कार्यः। "अदूरबांधवं संप्रति गृह्णीया"दिति वासिष्ठात्। अदूरश्चासौ बांधवश्चेत्यदूरबांधवः। सन्निकृष्टः सपिंड इति तदर्थात्। **तदभावे** असगोत्रोऽपि सपिंड एव। नत्वसपिंडः समानगोत्रः। गोत्रप्रवर्तकपुरुषापेक्षया सापिंड्यप्रवर्तकपुरुषस्य प्रत्यासन्नतरत्वात्। शौनकेनापि सगोत्रासगोत्रसाधारण्येन सपिंडेषु पुत्रकर्तव्यतोक्त्यनंतरं "तदभावेऽसपिंडो वे"ति सगोत्रासगोत्रसपिंडेषु पुत्रकर्तव्यतोक्तेः। ततोऽप्यसगोत्रसपिंडाभावे सपिंडोपि समानगोत्र एव। सोदक इति यावत्। समानगोत्रतयैव प्रत्यासन्नत्वात्। तथाच वसिष्ठः। "बंधुसन्निकृष्टमेव संप्रतिगृह्णीयात्" **इति**। भिन्नगोत्रसपिंडस्याभावे बंधुसन्निकृष्टः। बंधूनां सपिंडानां सन्निकृष्टः सपिंडः। स्वस्यासपिंडः सोदक इत्यर्थात्पर्यवस्यति। सोदकाभावे चतुर्दशादूर्ध्वमैकविंशात्सगोत्रः। समानगोत्रत्वेन सन्निकृष्टत्वात्। तदभावे भिन्नगोत्रोपीति। **तथाच वसिष्ठः**। "संदेहे चोत्पन्ने दूरे बांधवं शूद्रमिव स्थापयेदि"ति। दूरे बांधवा यस्यासौ दूरबांधवः। गोत्रसापिंड्याभ्यामसन्निहितमित्यर्थः। संदेहोऽत्र कुलशीलादिविषयः। स चासपिंडेऽसगोत्रे च भवतीति सोप्यनुज्ञायत इति। "अन्यत्र तु न कारयेदि"**ति**। अन्यत्र जात्यंतरे न कुर्यादित्यर्थः।

४० तत्रापि भूयसां सपिंडानां समवाये को ग्राह्य इति जिज्ञासायां सति भ्रातृपुत्रे प्रथमं स एव ग्राह्यः। **तथाच मनुः**। "भ्रातॄणामेकजातानामेकश्चेत्पु-

भूयसां समवाये क्रमः।

त्रवान् भवेत् । सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदि"ति । नन्व-
नेन वचनेनाकृतस्यैव भ्रातृपुत्रस्यानपत्यपितृव्यपुत्रत्वं विधीयत इति-
चेन्न । अस्य त्रयोदशत्वापत्त्या "पुत्रान्द्वादश यानाह नृणां स्वायंभुवो
मनुरि"ति द्वादशत्वोक्तेरसंगत्यापत्तेः । किंच । पुत्रीकरणं विना
भ्रातृपुत्रस्य पुत्रत्वे इतरपुत्रवदस्यापि पत्न्यादिभ्यः पूर्वमेवाप्रति-
हतो दायग्रहणाधिकारः प्रसज्येत । ततश्चापुत्रदायग्रहणाधिकारिक-
क्रमविधायके"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्र-
जा"इति **योगीश्वरवचने** भ्रात्रनंतरं भ्रातृसुतानां निवेशोऽसं-
गतः स्यात् । तस्मादिदं वचनं भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्यः
पुत्रप्रतिनिधिर्न कार्य इति निषेधतात्पर्यकमेव । कुल्लूकभट्टप्रभृतिरपीदं
वचनमित्थमेव व्याकृतं । **मिताक्षरायां विज्ञानेश्वरेणापि ।**
"भ्रातृणामेकजातानामि"त्येतद्वचनं भ्रातृपुत्रस्य पुत्रीकरणसंभवे
अन्येषां पुत्रीकरणनिषेधार्थं । न पुनः पुत्रत्वप्रतिपादनाय । "तत्सुता
गोत्रजा" इत्यनेन विरोधादित्येवं व्याकृतं । तदभावे सापत्नभ्रातृपु-
त्रः । भ्रातृणामित्यस्यैकजातानामितिविशेषणाक्रांतत्वात् । एकजातानां
भिन्नोदराणामेकपितृकानामपि । सपिंडांतरलाभसत्त्वे अन्यपुत्रवार-
णार्थं । न तु सर्वथा भिन्नोदरभ्रातृपुत्रस्याग्राह्यत्वार्थं । तन्निषेधस्यानु-
पलंभात् । तथाचात्रैकजनितानां सपत्नानामपीति सर्वज्ञनारायणो
व्याऽख्यत् । तथा अपुत्रसपत्न्याः सति सपत्नीपुत्रे अन्यः पुत्रप्रति-
निधिर्न कार्यः । किंतु सपत्नीपुत्र एव । **यथा ।** "भ्रातृणामे-
कजातानामि"तीदं वचनं भ्रातृपुत्रस्य पुत्रीकरणसंभवे अन्यः पुत्रः
प्रतिनिधिर्न कार्य इति निषेधतात्पर्यकं । तद्वदेवेदं । सर्वासामेक-
पत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवती-

र्मनुरि"ति मानवं वचः सपत्नीपुत्रस्य पुत्रीकरणसंभवे अन्यः पुत्रः प्रतिनिधिर्न कार्य इति निषेधतात्पर्यकमेव ।

**तदभावे** कनिष्ठो भ्राता पुत्रसदृशत्वात्। **तथाहि।** भ्रातरोऽपि न सर्वे परस्परं पुत्रत्वबुद्ध्यनर्हाः । किंतु । पूज्यत्वप्रयोजकसापिंड्य-संबंधवान् ज्येष्ठ एव । कनिष्ठस्तु भ्राता ज्येष्ठभ्रात्रपेक्षया न्यून-वयाः पूज्यत्वप्रयोजकसापिंड्यसंबधानाश्रयश्चेति पुत्रसदृशत्वाद्भवति पुत्रत्वबुद्ध्यर्हः । **तथाच स्मर्यते ।** "पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः । पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मत" इति। अत्र पितेवेति पुत्रवदिति च वदन् मनुर्ज्येष्ठे भ्रातरि पितृसा-दृश्यं कनिष्ठे पुत्रसादृश्यं स्पष्टमेवाभिहितवान्। ततश्च ज्येष्ठस्य भ्रातुः कनिष्ठो भ्राता पुत्रप्रतिनिधित्वेन ग्राह्यो भवतीति सिद्धं । **अत्रायं विवेकः ।** यदि मातापितृविहीनः कनीयान् भ्राता तदा निज-ज्यायसो भ्रातुः स्वयंदत्तः कृत्रिमो वा पुत्रो भवितुमर्हति । दत्रिमः पुत्रो भवितुं नार्हति दानकर्तुरभावात् । यदा तु जीवन्मातापितृकस्तदा पितृव्यादेर्दत्तकपुत्रीभूताय निजसोदरज्येष्ठभ्रात्रे जनकेन जनन्या वा पुत्रत्वेन दत्तः सन् दत्रिमपुत्रो भवितुमर्हति । **तत्राप्येवं ध्येयं ।** पित्रोर्जीवतोः सतोः पितृव्यादेरदत्रिमभूतस्य निजसोदरज्येष्ठभ्रातुः कनिष्ठो भ्राता न दत्तको भवति । पालनसमर्थयोर्जनकपित्रोर्जीव-मानत्वेन ज्येष्ठभ्रातरि पालयितृत्वाभावेन पितृसादृश्याभावात् कनि-ष्ठभ्रातरि पालनीयत्वाभावेन पुत्रसादृश्याभावात् **इति । तदभावे** कनिष्ठः सापत्नभ्राता । उक्तहेतुत्वात् । **तदभावे** पितृव्यपुत्रादयः सप्तपुरुषावधिकाः सपिंडाः । सगोत्रसपिंडाभावे भिन्नगोत्राः स-पिंडाः । तेषु पुत्रसादृश्यलक्षणावच्छिन्नत्वात् । दौहित्रो भागिनेयः

कनीयानात्ममातुलबंधुः आत्मपितृष्वसृबंधुः आत्ममातृष्वसृबंधुर्नवबंधूनां पुत्रादयश्चैते सापिंड्यसन्निकर्षक्रमेण ग्राह्याः। ननु "दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः। ब्राह्मणादित्रये नास्ति भागिनेयः सुतः कचित्" **इति** "दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते" **इति च शौनकः। तथा** स्वगोत्रजसुतालाभे पालयेदन्यगोत्रजं। दौहित्रं भागिनेयं च मातृष्वसृसुतं विना। दौहित्रं भागिनेयं च शूद्राणां च पतिर्यदि। **इति शाकलः। तथा** ब्राह्मणादित्रये नास्ति भागिनेयः सुतः कचित्। दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः। इति वृद्धगौतमः। **इति** शौनकशाकलवृद्धगौतमादिवचोभ्यो दौहित्रभागिनेयमातृष्वसृसुता दत्रिमा न भवेयुरिति चेन्न। एषां वचसां याज्ञवल्क्यस्मृति, मिताक्षरा, अपरार्क, मनुस्मृति, तव्द्याख्यातृ मेधातिथि, गोविंदराज, सर्वज्ञनारायण, राघवानंद, नंदन, रामचंद्र, कुल्लूकभट्ट, निर्णयसिंधु, धर्मनौका, शूद्रकमलाकरादिप्राचीनार्वाचीनप्रामाणिकनिबंधेष्वनुल्लेखेन केनचिदाधुनिकेन प्रक्षिप्तानीत्यतोऽनाकरत्वेनाप्रामाण्यात्। **किंच।** निर्णयसिंधौ दत्तकविषयकसापिंड्यप्रकरणे बृहन्मानवीयवृद्धगौतमीयवासिष्ठनारदीयवचसामनाकरत्वं "वस्तुतस्त्वित्यादिना पूर्ववचसां महानिबंधेषु काप्यनुपलंभात्। अपरार्कादिलेखनाभावात् पूर्वोक्तव्यवस्थायाश्च प्रातिभज्ञानतुल्यत्वाद्यैरेतल्लिखितं तत्तेषामेव शोभत **इत्यंतेन ग्रंथेन प्रदर्शितं। व्यवहारमयूखे पुरुषार्थचिंतामणौ चापि दत्तकप्रकरणे** वृद्धगौतमादिवचसामनाकरत्वमेव प्रदर्शितं। शौनकशाकलवचसोरपि वृद्धगौतमीयसमानार्थतया तुल्यकक्षीयत्वादनाकरत्वं स्पष्टमेवेति। **अन्यच्च** शौनकनाम्ना

प्रसिद्धानां कारिकाणामनार्षत्वात् । **तथाहि** शौनकीयत्वेन लिखितं वाक्यं तु शौनकसूत्रातिरिक्तोऽपपाठः । श्लोकरूपायाः स्मृतेरभावेन मानुषकारिकारूपमेतत् वृत्त्यादिमूलकमेवेति स्पष्टमाश्वलायनगृह्यस्य **गाणेश्यां वृत्तौ** ॥ ननु कौस्तुभदत्तकमीमांसादावेषां वचसामुद्धृतत्वादेव प्रामाणिकत्वेन दौहित्रभागिनेयौ दत्रिमौ न भवत इति चेन्न । **धर्मद्वैतनिर्णये पुत्रपरिग्रहविधिसंशयोच्छेदपरिच्छेदे** पदवाक्यप्रमाणपारावारपारीणभट्टशंकरैः । व्यवहारमयूखे भट्टनीलकंठैः । दत्तचंद्रिकायां श्रीमन्नागोजीभट्टैः । निर्णयसिंधुटीकायां कृष्णंभट्टैश्च पूर्वोक्तवचांसि मीमांसाशास्त्रतः सम्यग्विविच्य चातुर्वर्ण्ये दौहित्रभागिनेयौ दत्रिमौ भवत एवेति सिद्धांतितत्वात् । स सिद्धांतस्तु तत्र तत्र द्रष्टव्यः । **विस्तरभिया नात्र लिखितः** । अत एव सर्वत्र दौहित्रभागिनेययोर्दत्रिमत्वेन पुत्रीकरणरूढिः संगच्छत **इति** । तथा यदुक्तमपरं दत्तकमीमांसायां भागिनेयपदं पुत्रसदृशानां सर्वेषामुपलक्षणं । विरुद्धसंबंधस्य समानत्वात् । विरुद्धसंबंधश्च नियोगादिना स्वयमुत्पादनायोग्यत्वं **इत्युपक्रम्य** । तथा प्रकृतेऽपि विरुद्धसंबंधपुत्रो वर्जनीय इति । यतो रतियोगः संभवति तादृशः कार्य इति यावदित्यन्तमुक्तं । **तदपि शास्त्रासम्मतमेव** । दत्रिमे पुत्रत्वस्य शास्त्रैकसमधिगम्यत्वेन औरसवज्जन्यपुंस्त्वरूपपुत्रत्वस्याभावेन रतियोगस्यासंभवाद्विरुद्धसंबंधस्यानापत्तेः । किंच विरुद्धसंबंधापत्यवर्जनांगीकारे शूद्रस्यापि दौहित्रभागिनेयौ दत्रिमौ न स्यातामेव । दुहितरि भगिन्यां च नियोगादिना स्वयमुत्पादनायोग्यत्वात्तन्मते शूद्रस्यापि कथं शौनकीयं शास्त्रमनुजानातीति सुधीभिरालो-

चनीयम् । ततश्च दौहित्रभागिनेयमातृष्वसृसुता दत्त्रिमा भवंत्येवेति सिद्धं ॥ अथ भिन्नगोत्रसपिण्डाभावे सप्तमादूर्ध्वं चतुर्दशावधिकाः सगोत्राः सोदका ग्राह्याः । सोदकाभावे चतुर्दशादूर्ध्वं ऐकविंशात् गोत्रजाः । गोत्रजाभावे अन्यगोत्रीयः । असपिंडोऽपि जायासोदरादिर्यः कश्चन इति । स च जातकर्मादिसंस्कृतस्तदसंस्कृतो वा । अनुपनीत उपनीतो वा । परिणीतोऽपि जातपुत्रोऽपि च दत्त्रिमो भवति । बाधकाभावादिति द्वैतनिर्णये शंकरभट्टाः । व्यवहारमयूखे नीलकंठभट्टाश्च । "शुनःशेपो विश्वामित्रपुत्रः स्वयमेवाभवदि"ति बह्वृचब्राह्मणसंवादाच्च । शुनःशेपश्चोपनीतः । अनुपनीतस्य वेदाध्ययनासंभवेन वैदिकमंत्रैः प्राजापत्यादिस्तुतौ इंद्रदत्तहिरण्मयरथप्रतिग्रहे च प्रवृत्त्यनुपपत्तेः । श्रुतिवशाज्जातोपनयनः स्वयंदत्त इव जातोपनयनस्य दत्तकस्यापि दुर्वारत्वादिति निर्णयसिंधुटीकायां । यानि तु । अकृतसंस्कार एवापूर्णपंचवर्षीय एव दत्तकः स्वीकार्य इत्यर्थप्रतिपादकानि "न क्षेत्रजादितनयं राजा राज्येऽभिषेचयेत् । पित्रर्णशोधने नित्यमौरसे तनयेऽसति ॥ १ ॥ अत्रासतीति छेदः । औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गुढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥ २ ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च दासश्च षडेते पुत्रपांसनाः ॥ ३ ॥ अलाभे पूर्वपूर्वेषां परान्समभिषेचयेत् । पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् ॥ ४ ॥ दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः । आयांति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥ ५ ॥ पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ॥ आचूडांतं न पुत्रः स पुत्रतां याति चान्यतः ॥ ६ ॥ चूडाद्या यदि संस्कारा निजगोत्रेण

वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥ ७ ॥ ऊर्ध्वं तु पंचमाद्वर्षान्न दत्ताद्याः सुता नृप । गृहीत्वा पंचवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥ ८ ॥ पौनर्भवं तु तनयं जातमात्रं समानयेत् । कृत्वा पौनर्भवस्तोमं जातमात्रं तु तस्य वै ॥ ९ ॥ सर्वांस्तु कुर्यात्संस्कारान् जातकर्मादिकानथ । कृते पौनर्भवस्तोमे सुतः पौनर्भवस्ततः ॥ १० ॥ एकोद्दिष्टं पितुः कुर्यान्न श्राद्धं पार्वणादिकम् । क्रीता पारमिता मौल्यैः सा दासीति निगद्यते ॥ ११ ॥ इत्येतानि कालिकापुराणवचनानि प्रायशः कालिकापुराणपुस्तकेष्वदर्शनान्निर्मूलानि । समूलत्वेऽपि कालिकापुराणवचसां राज्यार्हपुत्रपरतया तस्यैव प्रतिगृहीतृकर्तृकसंस्कारस्यावश्यकत्वपराणीति निर्णयसिंधुटीकायां कृष्णंभट्टाः । उपक्रमादिलिंगाच्च । पुरुषार्थचिंतामणावप्येवं । अथवा प्रबलाभ्यां श्रुतिस्मृतिभ्यां दुर्बलानां पुराणोक्तवचसां बाधो युक्त इतिकृत्वोक्तश्रुत्या बाधितत्वादुपेक्ष्यानीति । अयमेव न्यायः क्रीतापविद्धकृत्रिमस्वयंदत्तेषु बोध्य इति ॥

४१ अथ केवलद्व्यामुष्यायणानां दत्रिमादीनां गोत्रप्रवरा निर्णीयंते । (१) तत्र प्रथमं केवलानामुच्यंते केवलदत्रिमादिभिर्गोत्रप्रवरसंबंधिषु विवाहादिसर्वस्थलेषु पालकैकपितुर्गोत्रप्रवरा वर्ज्यावर्ज्यतया स्वीकर्तव्याः । मनुना जनकगोत्रादिनिवृत्तेरुक्तत्वात् । तथाच मनुः "गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधे"ति । गोत्रं वंशपरंपराप्रसिद्धमिति विज्ञानेश्वरः कमलाकरभट्टश्च । रिक्थं धनं । जनयितुः स्वस्वामिभावसंबंधः षष्ठ्यर्थः । जनकस्वामिनी गोत्रधने इति यावत् । दत्रिमः दत्तकः ।

तत्र केवलानां गोत्रप्रवरविचारः

केवलदत्तक एवात्र द्व्यामुष्यायणे जनकगोत्राद्यनुवृत्तेरुक्तत्वात् । न क्वचिद्दत्रिमो हरेदित्यपि पाठः । न क्वचिन्न कदाचित् । हरेत्प्राप्नुयात् । हृञ् हरणे । हरणं प्रापणं स्वीकारः । तत्र हेतुः । गोत्ररिक्थानुग इति दत्रिमस्य विशेषणमिति दत्तोद्धारे । गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः । प्रायस्तत्समनियत इति यावत् । इति । व्यवहारमयूखेऽप्येवमेव । पिंडः सापिण्ड्यं । न श्राद्धं ददतः स्वधेति पौनरुक्त्यापत्तेः स्वधा और्ध्वदेहिकादिश्राद्धं । ददतः पुत्रं ददतो जनकस्य । व्यपैति निवर्तते इति मन्वर्थः । अत्र मेधातिथिरपि । यः अन्यस्मै स्वपुत्रं ददाति तस्मान्निवर्तते न तस्य कर्तव्यमित्यर्थः । एष एव न्यायः कृत्रिमादीनां सहोढापविद्धद्व्यामुष्यायणानामुभयोपकारत्वमिति । तथा सर्वज्ञनारायणोऽपि । अत एव नासौ द्व्यामुष्यायणः । प्रतिग्रहीतृगोत्रत्वात् । किंतु देवरजपुत्रिकासुतावेव द्विपितृकत्वात् । इति । तथा श्रौतसागरपारावारपारीणा औपासनिकोपनामानो रघुनाथभट्टा अपि दत्रिम इत्यत्र दानार्थाद्दाधातोर्भावार्थे ड्वितः क्त्रिरितीड्वित् । ततो निवृत्त्यर्थे क्त्रिमपोर्विधानं । तेनायमर्थः । दानेन जनकगोत्रान्निवृत्तोऽपि गोत्रसंबंधकार्यमात्रेऽपि निवृत्त इति । दत्तक इत्यत्र भावार्थे क्तप्रत्ययः । तेन दानमात्रसिद्धिः । न तु निवृत्तिः । संज्ञायां कन्प्रत्ययः तेन दत्तक इत्यस्य संज्ञावाचकत्वमिति व्यवहारमयूखे नीलकंठभट्टा अपि । वस्तुतस्तु "जातपुत्रः कृष्णकेशोऽग्नीनादधीते" इत्यत्र यथा वयोऽवस्थाविशेषो लक्ष्यते । यथा वा "अर्धमंतर्वेदि मिनोति अर्धं बहिर्वेदि" इत्यनेन देशविशेषो लक्ष्यते तथाऽत्र गोत्ररिक्थपिंडस्वधापदैर्जनकादीनां संबंधप्रयुक्तं कार्यमात्रं लक्षयित्वा तन्निवृत्तिरुच्यते । तेन सोदर-

पितृव्यादिसंबंधनिवृत्तिरपि सिद्धा भवति । इति ॥ पुरुषार्थचिंतामणिरपि । प्रकृते दत्रिमेऽपि निरुपाधिकदानात् पितृगोत्रसापिण्ड्यसूतकनिवृत्तिः । प्रतिग्रहीतृगोत्रसापिंड्यादिप्राप्तिरेवोचिता । व्याप्यपुत्रत्वविधायकवचनानामेव व्यापकगोत्रसापिंड्यविधायकत्वात् । शिष्टैरपि दत्तकपुत्रादिभिः प्रतिग्रहीतृगोत्रेणैव प्रतिग्रहीतृकुले एव दत्तकसपिंडीकरणानुष्ठानस्य प्रतिग्रहीतृसपिंडाद्यैर्दशरात्राद्याशौचानुष्ठानस्य "गोत्ररिक्थे" इति मनुवचनस्यातिप्रसिद्धत्वाच्चेति । चंद्रिकाकाराश्च । गोत्ररिक्थानुगः पिण्ड इति । एतेन पुत्रत्वापादकक्रिययैव दत्रिमस्य प्रतिगृहीतृधने स्वत्वं तत्सगोत्रत्वं च भवति । दातृधने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीति । मदनपारिजातोऽपि । दत्रिमाणां जनकगोत्रनिवृत्त्या अन्यगोत्रप्राप्तिरुक्ता मनुना "गोत्ररिक्थे जनयितुरि"ति इति । "पिंडदोंऽशहरश्चैषा" मित्यत्र मिताक्षरायामपि । मनुः "गोत्ररिक्थे जनयितुरि" त्यत्र दत्रिमग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वादिति ॥ दत्तकमीमांसायामपि । अत्र च स्वधापिंडशब्दौ आशौचादिसकलपितृकर्मोपलक्षणं । पिण्डदानादिनिमित्तभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात् । प्रेतपिंडदानादेश्चाशौचपूर्वकत्वनियमात् । ततश्च पिंडनिवृत्त्या आशौचनिवृत्तिरर्थसिद्धैव । "असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् । प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् । यावदाशौचमुदकं पिंडमेकं च निर्वपेदि"त्यादिवाक्यपर्यालोचनया पिंडाशौचयोः समव्याप्तिसिद्धेरिति ॥ तथाचेदमत्र सिद्धं । केवलदत्रिमस्य निरुपाधिकदानादेव मनुवचनेनच जनकगोत्रप्रवररिक्थसापिंड्याशौचश्राद्धपितृपुत्रादिसं-

बंधतत्तत्प्रयुक्तकार्यनिवृत्तिरेवेति । प्रतिग्रहीतुरेव गोत्रप्रवररिक्थसापिंड्याशौचश्राद्धपितृपुत्रसंबंधतत्तत्प्रयुक्तकार्यप्रवृत्तिश्चेति फलितं। यत्तु संस्कारकौस्तुभे । तत्र यश्च प्रतिगृहीत्रा जातकर्मादिभिश्चूडादिभिर्वा संस्कृतस्तदेकगोत्रः । एतमभिप्रेत्यैव "गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः" इति शास्त्रं प्रवृत्तं । एतदन्यस्तु प्रतिग्रहीत्रोपनयनमात्रसंस्कृतस्तदुत्तरं प्रतिगृहीतो वा देवरातवद्द्विगोत्र एवेति । तथा नंदपंडितैर्दत्तकमीमांसायां । ततश्चूडान्तसंस्कारसंस्कृतस्य परिगृहे व्यामुष्यायणता भवति गोत्रद्वयेन संस्कृतत्वात् । इत्याद्यभिधायाग्रे । यत्तु "गोत्ररिक्थे० सुत" इति तत्प्रतिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यमिति ॥ अत्र पुरुषार्थचिंतामणिकार आह । उत्पत्तिसमये जनकगोत्रानुवृत्त्या तद्गोत्रेण संस्काराद्वा अपत्ये गोत्रसंबंधे सिद्धेऽपि तत्र प्रतिग्रहीत्रा संस्कारे कृते तद्गोत्रसंबंधे सिद्धेऽपि उत्पत्तिसमये अनुवर्तमानजनकगोत्रनिवृत्तिः कथमित्याकांक्षायां "गोत्ररिक्थे" इत्यनेन "स्वगोत्राद्भ्रश्यते नारी" इत्यादिभिरिव अनुवर्तमानस्य चूडांतसंस्कारादुपनयनांतसंस्काराद्वा रूढीकृतसंबंधस्य जनकगोत्रस्य निरुपाधिकदानमेव निवर्तकं प्रतिपाद्यते । तथाच निरुपाधिकदानसंप्रदानभूतप्रतिग्रहीत्रा जातकर्मादिभिरुपनयनादिभिर्वा विवाहांतैर्वा संस्कारैः संस्कृतोऽसंस्कृतो वाऽपि स तदेकगोत्रस्तस्यैवासाधारणपुत्रः संपन्नः इत्यव्यामुष्यायण एव भवति । इति ॥ यत्तु अपरमुक्तं दत्तकमीमांसायां । द्विविधा दत्तकादयः । नित्यव्यामुष्यायणा अनित्यव्यामुष्यायणाश्च । आवयोरयमिति संविदा कृता नित्याः । उपनयनादिभिरेव प्रतिगृहीत्रा संस्कृता अनित्याः । जातमात्रपरिगृहे पितृगोत्रमेव ।

तदिदं सर्वमाह सत्याषाढः । नित्यानां व्यामुष्यायणानामित्यादि इति च । अत्रापि पुरुषार्थचिंतामणिकार एवाह । तदपि सत्याषाढप्रवराध्याये एतत्सूत्रद्वयाभावादुपेक्ष्यं । कचित्पुस्तके तद्दृष्टमिति चेत्तथापि "अथेमानि व्यामुष्यायणकुलानि भवंती"त्युपक्रम्य शौंगशैशिर्यादयः पठिताः सूत्रांतरे तद्विषयमेव प्रथमसूत्रं । द्वितीयं तु । "व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः । गोत्रद्वयेप्यनुद्वाह्याः शौंगशैशिरयो यथेति" संग्रहकारोक्तेः दत्तक्रीतादीनां जनकपालकयोर्गोत्रनिषेधः । शौंगशैशिरिग्रहणस्य प्रदर्शनार्थत्वादिति नारायणवृत्तेः । इदानींतनसर्वदत्तकविषयमिति कल्पनायामपि नित्यवदनित्यवदित्यंशयोर्वैयर्थ्यमेव । व्यामुष्यायणमात्रस्य गोत्रद्वयनिषेधादिति दिक् । तस्माद्व्यामुष्यायणदत्तकस्य सर्वथैव जनकगोत्रनिवृत्तिरिति सिद्धं नापन्होतुं शक्यमिति राद्धांतः ॥ केवलैर्दत्रिमादिभिः पालकैकपितुर्गोत्रप्रवरा गोत्रप्रवरसंबंधिषु विवाहादिकार्यस्थलेषु वर्ज्यावर्ज्यतया ग्राह्या इति यदुपक्रमे प्रतिज्ञातं तदेव युक्ततरत्वेनादरपथमारोहतीति ॥

व्यामुष्यायणगोत्रप्रवरविचारः

(२) **अथ** व्यामुष्यायणदत्तकादिभिस्तु जनकपालकोभयपितुर्गोत्रप्रवरा गोत्रप्रवरसंबंधिषु विवाहादिकार्यस्थलेषु वर्ज्यावर्ज्यतया ग्राह्याः । महर्षिकात्यायनलौगाक्षिप्रभृतिसूत्रप्रणेतृभिः प्राचीनैरर्वाचीनैर्हेमाद्रिकमलाकरप्रभृतिनिबंधृभिश्च व्यामुष्यायणदत्तकादीनामुभयगोत्रप्रवरसंबंधित्वोक्तेः । नात्र केऽपि विवदंते । व्यामुष्यायणानामुभयगोत्रप्रवरसंबंधित्वेन शौंगशैशिर्यादिवत् । इदानींतनैरपि व्यामुष्यायणदत्तकादिभिर्विवाहे द्वयोरपि पित्रोर्गोत्रप्रवरा वर्ज्याः । "एवं दत्तक्रीतकृत्रिमस्वयंदत्तपुत्रिकापुत्रादीनामुत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति" प्रवरमंजरीकारनारायणवृत्तिप्रयोगपारिजा-

तादिषु व्यामुष्यायणानुपक्रम्योक्तत्वात् । तथा प्रवराध्याये "व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः । गोत्रद्वयेप्यनुद्वाह्याः शौंगशैशिरयो यथे" त्यत्र व्यामुष्यायणका इति विशेषणोपादानाच्च । अत एव "शतपुरुषोत्तरमपि द्विगोत्रत्वं नापैती"ति धर्मसिंधुकारोक्तिरपि व्यामुष्यायणपरैवेति विज्ञेयं । तेनायमर्थो निष्पद्यते । इदानींतनानामपि दत्तकादिव्यामुष्यायणानां शौंगशैशिर्यादिवत् शतपुरुषोत्तरमपि द्विगोत्रत्वमेव । पुरुषसंख्यानियामकप्रमाणाभावादिति ।

(३) अथ व्यामुष्यायणानामुभयगोत्रप्रवरव्यवस्था । तत्रा-

असमानगोत्रे व्यवस्था ।

समानगोत्रे आश्वलायनः "तेषामुभयतः प्रवृणीते । एकमितरतो द्वावितरतः । द्वौ वेतरतस्त्रीनितरतः । न चतुर्णां प्रवरोऽपि न पंचानामतिप्रवरणमिति । तत्र विशेषमाह कात्यायनो लौगाक्षिश्च । तेषां तथैव प्रवराः स्युः । द्विःसन्निपाते पूर्वः प्रवर उत्पादयितुरुत्तरतः प्रतिग्रहीतुरिति । त्रीनेव पंच वा प्रवृणीयादिति ॥

(४) समानगोत्रे तु कात्यायनो लौगाक्षिश्च व्यवस्थामाह ।

समानगोत्रे व्यवस्था

अथ यदि पितृव्येण ज्ञातिनैकार्षेयेण जातास्ते संहतकुलीनाः परिग्रहीतुरेव भवंतीति" इति ॥

(५) अथ केवलव्यामुष्यायणदत्तकादीनां मातृगोत्रविचारः

तत्र प्रथमं केवलानां मातृगोत्रविचारः

प्रदर्श्यते । तत्र प्रथमं केवलैर्दत्त्रिमादिभिः पालकैकपितृगोत्रवत्पालकमातृगोत्रमेव विवाहादिषु वर्जनीयं । निरुपाधिकदानेन जनकपितृगोत्रप्रवरादिनिवृत्तिवत्तुल्यन्यायेन जनकमातृगोत्रनिवृत्तेरर्थसिद्धत्वादिति ।

(६) अथ द्व्यामुष्यायणदत्तकादीनां मातृगोत्रविचारः। द्व्यामुष्यायणैर्दत्तकादिभिस्तु जनकपालकोभयपितुर्गोत्रवज्जनकपालकोभयमातुर्गोत्रमेव विवाहादिषु वर्ज्यम्। समानन्यायादेवेति। मातृगोत्रे तु न प्रवरचिंतनावश्यकत्वमिति तु शुक्लयजुर्वेदीयकर्मकांडप्रदीपे मातृगोत्रनिर्णये ज्ञेयं॥ **इति मातृगोत्रविचारसंक्षेप इति॥**

(१) द्व्यामुष्यायणानां मातृगोत्रविचारः

**४२ अथ** केवलद्व्यामुष्यायणदत्तकादीनां सापिंड्यं प्रस्तूयते। तत्रादौ केवलानां दत्तकादीनां सापिंड्यं प्रस्तूयते। तच्च सापिंड्यं द्विविधं। एकशरीरावयवान्वयित्वं। एकपिंडदानक्रियान्वयित्वं च। केवलदत्रिमादीनां जनककुले द्विविधमपि सापिंड्यं न "गोत्ररिक्थे जनयितुरि" ति प्रागुक्तमनुवचनेन तन्निवृत्तेरुक्तत्वात्। ननु गोत्ररिक्थे इत्यनेन जनककुले सापिंड्यद्वयमध्यादेकपिंडदानक्रियान्वयित्वरूपसापिंड्यनिवृत्तिर्वाच्या नतु सर्वथा सापिंड्यनिवृत्तिरिति चेन्न स्वतःसिद्धैकशरीरावयवान्वयित्वरूपसापिंड्यसद्भावात्तेनैवैकपिंडदानक्रियान्वयित्वरूपसापिंड्यरूपगतार्थत्वात्तत्र तदप्राप्त्या तन्निवृत्तिप्रसंगासंगत्यापत्तेश्च। पालककुले तु साप्तपौरुषं पांचपौरुषं एकपिंडदानक्रियान्वयित्वरूपं सापिंड्यं "ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यः पंचमादि"ति गौतमोक्तौरससापिंड्यवदुत्सर्गसिद्धमस्त्येवेति। एकशरीरावयवान्वयित्वं तु न। प्रत्यक्षबाधात्। **यत्तु सापिंड्यमीमांसायां। मदनपारिजातादौ च** केवलदत्रिमादीनां पालककुले पांचपौरुषं

तत्र प्रथमं केवलानां सपिंड्यप्रस्तावः।

त्रिपौरुषमित्यल्पं सापिण्ड्यमुक्तं । तथाहि सापिंड्यमीमांसायां । पालकपितृकुले तु पांचपौरुषं । पालकमातृकुले तु त्रिपौरुषं । तथाचापरार्के पैठीनसिः "त्रीन्मातृतः पंच पितृतः पुरुषानतीत्योद्वहेदि"ति । **एतत्स एव व्याचख्यौ ।** दत्तकादीन् पुत्रान्पितृपक्षतो निवृत्तपिंडगोत्रार्षेयान्प्रत्येतदुच्यते पंच पितृत इत्यादिनान्यान्प्रतीति । यत्तु वृद्धगौतमः । स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रमायांति न सापिंड्यं विधीयते" **इति ।** यच्च वसिष्ठः "अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः । स्वगोत्रेण स्वशाखोक्तविधिना स्वस्वशाखभागि"ति । यच्च नारदः "धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पूर्ववत् । अंशपिंडविभागित्वं तेषु केवलमीरितमि"ति तत्पालककुले सात्पपौरुषं सापिंड्यं नेत्येवंपरं । नतु सर्वथा सापिंड्यनिषेधपरं । **इति मदनपारिजाते ।** पंच पितृत इति । यस्य दत्तपुत्रः पिता तस्य दत्तस्य यज्जनककुलं तद्विषयमिति एतन्निराकृतं **भट्टकमलाकरैः । वस्तुतस्तु** पूर्ववचसां महानिबंधेषु क्वाप्यनुपलंभादपरार्कादिलेखनाभावात्पूर्वोक्तव्यवस्थायाश्च प्रातिभज्ञानतुल्यत्वाद्धैरेतल्लिखितं तत्तेषामेव शोभते । त्रीन्मातृत इत्यादि तु सवर्णसापत्नमातृकुलपरं "यद्येकजाता बहवः" इति शंखैकवाक्यत्वादिति निर्णयसिंधौ । **तथा व्यवहारमयूखे नीलकंठभट्टानां च सिद्धान्तः ।** अतोऽत्र केवलदत्तकस्य पालकपितृकुले सात्पपौरुषं मातृकुले पांचपौरुषं सापिंड्यं । **यत्तु वृद्धगौतमः** "स्वगोत्रेण विधीयते" **इति । यत्तु बृहन्मनुः** "दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिंडता । पंचमी सप्तमी चैव गोत्रित्वं पालकस्य चे"ति । **यदपि नारदः** "धर्मार्थं वर्धिताः पुत्राः०

मीरीतमि"ति। वाक्यानि तान्यनाकराणि। साकरत्वेऽपि द्व्यामुष्यायणस्य प्रतिग्रहीतृकुले साप्तपौरुषसापिंड्याभावप्रतिपादनार्थं। केवलदत्तके पूर्वोक्तगौतमीयेन पालककुले साप्तपौरुषसापिंड्यस्योक्तत्वात्। **मानवीयेन च** जनककुले सापिंड्यनिवृत्तेरुक्तत्वादिति। अत्रेदमाकूतं। साकरत्वेऽपि द्व्यामुष्यायणस्य प्रतिग्रहीतृकुले साप्तपौरुषसापिंड्याभावप्रतिपादनार्थमिति मतं। येषां मते वृद्धगौतमनारदबृहन्मनुवचनानि साकराणि तेषां मतं। न व्यवहारमयूखकृतो मतमिति॥ **तत्सिद्धं** केवलदत्रिमादीनां पालकपितृकुले पालकमातृकुले एव साप्तपौरुषं पांचपौरुषं च सापिंड्यमिति सर्वं निरवद्यमेतदिति केवलदत्रिमादीनां सापिंड्यप्रस्तावः॥

द्व्यामुष्यायणानां सापिंड्यप्रस्तावः

(२) अथ द्व्यामुष्यायणदत्तकादीनां सापिंड्यं प्रस्तूयते। दत्तकादीनां जनकपालकोभयकुले क्रमादेकशरीरावयवान्वयित्वमेकपिंडदानक्रियान्वयित्वं साप्तपौरुषं पांचपौरुषं सापिंड्यमस्त्येव। द्व्यामुष्यायणानां सोपाधिकदानसंपन्नत्वेन जनकगोत्रसापिंड्यादेरनिवृत्त्या जनककुले दानात्पूर्वं यत्सापिंड्यमासीत्तदेव दानोत्तरमपीति **न कश्चिद्विशेषः।** पालककुले तु प्रतिग्रहादिना तत्प्रयुक्तोत्पन्नपुत्रत्वेन तद्गोत्रसापिंड्यादेः प्राप्त्या प्राप्तसाप्तपौरुषपांचपौरुषसापिंड्यस्य दुर्निवारत्वात् अल्पसापिंड्यविधायकप्रमाणाभावात्। ननु वृद्धगौतमवसिष्ठनारदबृहन्मन्वादीनां वचांसि प्रमाणानि संत्येवेति चेन्न तेषामनाकरत्वं प्रागुक्तमेव। नागोजीभट्टकृतसापिंड्यप्रदीपेऽप्येवं। अत एव तानि केनचित्स्वकपोलकल्पनाकौतूहलतया प्रक्षिप्तानीति मंतव्यं। **अत एव निर्णयसिंधौ "मम तु** पालककुले एक-

पिंडदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिंड्यं । बीजिनश्चेति गौतमोक्तेर्जनककुलेऽपि तावदेवेति भट्टकमलाकरोक्तसिद्धांतः संगच्छते। नन्वयं भट्टकमलाकरसिद्धांतः केवलदत्रिमपरोऽस्तीति चेदत्र ब्रूमः। यदि तत्परस्तदा सोऽपि मनुवचनविरुद्धत्वात्खंडितः स्यात् । न तेनास्माकमत्र काऽपि क्षतिरिति । ततश्च सिद्धं । द्व्यामुष्यायणदत्तकादीनां जनकपालकोभयकुले साप्तपौरुषं पांचपौरुषसापिंड्यमिति

**केवलद्व्यामुष्यायणदत्तकादीनां सापिंड्यप्रस्तावः ॥**

केवलदत्रिमादीनां विवाहोपयोगी गोत्रविषयको निर्णयः

४३ (१) अथ केवलदत्रिमादीनां जनकगोत्रसापिंड्यविषये विवाहाद्युपयोगि किंचिन्निर्णीयते । तत्र प्रथमं गोत्रविषये । सर्वथा जनकगोत्रसापिंड्यनिवृत्त्या केवलदत्रिमादीनां जनकगोत्रसापिंड्ययोः परिणयो भवत्येव। नात्र तत्प्रयुक्तो निषेधः प्रसरति। **ननु** । "असगोत्रा च या पितुरि"ति मनुवचनात्तन्निषेधः । अत्र यत्तु "गोत्ररिक्थे० स्वधेति" मनुवचनं तद्दत्तकादेर्जीवत आर्षेयवरणाभिवादादिषु मृतस्य च श्राद्धदेवतात्वे जनकगोत्रसंबंधनिवृत्त्यर्थं । विवाहस्तु जनकगोत्राया निषिद्ध एव । स्वस्य च जनकगोत्रसंबंधाभावेन तस्याः सगोत्रात्वाभावेऽपि पितृसगोत्रत्वात् । "असगोत्रा च या पितुरि"त्यत्र पितृग्रहणस्येदमेव प्रयोजनमिति अपरार्क शूलपाणि स्मृतिचंद्रिका संस्कारकौस्तुभादौ । तथा । तस्माद्व्यामुष्यायणदत्तकस्य सर्वथा जनकगोत्रनिवृत्तावपि "असगोत्रा च या पितुरि"ति **मनुवचनादेव** जनकगोत्रे विवाहनिषेधः । न तु तत्संततेरिति सिद्धं । इतिपुरुषार्थचिंतामणौ । **तथा** । "गोत्ररिक्थे० स्वधे"ति मनुवचनं तद्दत्तकादेर-

भिवादनादिषु जीवतो मृतस्य श्राद्धे देवतात्वे जनकगोत्रसंबंधनिवृत्त्यर्थं । विवाहे तु जनकपालकगोत्रे अपि वर्ज्ये **इति निर्णयसिंधौ । प्रवरदर्पणे चोक्तत्वादिति चेन्मैवं** । सामान्यस्य विना प्रामाण्येन कार्यविशेषे संकोचस्यायुक्तत्वात् । किंच । अनेकार्थेष्वेकार्थस्य कार्यसंकोचस्य सर्वथा निवर्तकत्वस्यात्यंतायुक्तत्वाच्चेति रघुनाथभट्टाः । व्यवहारमयूखे भट्टनीलकंठोक्तं "**वस्तुतस्तु इत्यादि** । तथाच गोत्ररिक्थपिंडस्वधापदैर्जनकादीनां संबंधप्रयुक्तकार्यमात्रं लक्षयित्वा तन्निवृत्तिरित्युच्यते । तेन सोदरपितृव्यादिसंबंधनिवृत्तिः सिद्धा भवति । **इत्यन्तेन**" उत्पत्तिकृतगोत्रनिवृत्तिवज्जन्यजनकसंबंधनिमित्तकपितृत्वपुत्रत्वाभावादेव "असगोत्रा च या पितुरि"ति निषेधाप्रवृत्त्यसंभवात् । **अपि च** । "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां कांतामसपिंडां यवीयसीं ॥ अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥" **इति याज्ञवल्क्य**वाक्येन लक्षण्यामित्यादिविशेषणविशिष्टा विवाहार्थं या प्राप्ता तां "असपिंडा च या मातुरसगोत्रा च या पितुरि"त्यनेनानूद्य प्राशस्त्यमात्रं द्योत्यते । सा प्रशस्तेतिपदाभिधानात् । इति श्रौतसागरपारावारपारीणौपासनिकोपनामकरघुनाथभट्टैर्मनुवचनस्य वास्तविकार्थोक्तेश्च । **मिताक्षरायां मनुस्मृतिव्याख्यासु च मेधातिथिप्रभृतीनामपरार्कादिवत् व्याख्यानाभावात् अपरार्कादिव्याख्यानानां विनिगमनाविरहाच्च । दत्तकमीमांसायामपि** । अत्र कैश्चिदुच्यते । "असपिंडा च या मातुरसगोत्रा च या पितुरि" त्यादिनोपक्रम्य तस्मादौरसविषयमेवेदं वचनं गर्भाधानादिप्रक्रमात् । पंचमातसप्त-

मादूर्ध्वमिति वचनांतरैकवाक्यत्वाच्चेत्यंतेन ग्रंथेन असपिंडा च या मातुरिति वचनस्य दत्तकपरत्वं निराकृत्य औरसपरत्वेन सिद्धांतितत्वादिति । तत्सिद्धं, केवलदत्रिमादीनां जनकगोत्रे परिणय **इति केवलदत्रिमादीनां जनकगोत्रविषयकविवाहोपयोगी निर्णयः ॥**

सापिंड्य विषयक-निर्णयः

(२) अथ केवलद**त्रिमादीनां सापिंड्यविषये किंचिन्निर्णीयते** । तथाच केवलदत्रिमादीनां जनकगोत्रे विवाहो भवतीत्युक्तं तत्तथैवास्तु । परं केवलदत्रिमादीनां जनककुले मातापित्रोः सापिंड्ये विवाहो नास्तीत्यंगीक्रियतां । कुत इति चेदुच्यते । तथाहि पुरुषार्थचिंतामणौ । न चैवमव्यामुष्यायणदत्तकपुत्रस्य दत्तकजनककन्यापरिणयः स्यादिति चेन्न ''पितृष्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।'' **इति याज्ञवल्क्येनैव परिहृतत्वादिति । न चैवं** तृतीयां वेति चतुर्विंशतिमतेन जनकपौत्र्यादिका परिणेया स्यादिति वाच्यं । तृतीयाया लिंगावष्टंभेनैव तस्य विधायकत्वेन मातृष्वस्रीयाया इव प्रकृतेऽपि तदपत्यभावादिति । दत्तकपौत्रादेरव्यामुष्यायण**दत्तकजनकपौत्र्यादिविवाहस्तु** ''चतुर्थीं वे''त्यादि वाक्यैः ''असपिंडेत्यादि'' वाक्यैकवाक्यतयैव विहितत्वेन युक्त एवेति विभावनीयमिति सिद्धांतितत्वादिति चेन्न । पितृत्वादिसंबंधनिवृत्त्या तत्प्रयुक्तपितृष्वसृत्वमातृष्वसृत्वमातुलत्वादि यावत्संबंधाभावात्सापिंड्यनिवृत्त्या तदभावाच्चाविचारितरमणीयतरत्वेन यत्किंचिदिति शास्त्रासम्मतम् । अतोबाधकाभावात्केवलदत्रिमादिपुत्रपौत्रा-

दीनां केवलदत्त्रिमादिजनककन्यापौत्र्यादिकाभिः साकं विवाहो भवत्येवेति । केवलदत्त्रिमादीनां तु जनककन्यां वर्जयित्वा जनकपौत्र्यादिभिः सह विवाहो भवतीति पुरस्तात् वक्ष्याम इति । **ननु संस्कारमयूखे** । "गोत्ररिकूथे० स्वधे०"ति । दत्त्रिमस्य सापिंड्यनिवृत्तौ जनककन्यादिपरिणयनं स्यादिति । स्यादेव । यदि "ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यश्च पंचमादि"ति वाच्यं नाभविष्यत् । अत्र हि बीजिग्रहणेन दत्त्रिमस्य जनककुले सापिंड्यमस्तीति ज्ञायत इत्युक्तं तथा **व्यवहारमयूखेऽपि** । "ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यः पंचमादि"ति गौतमीयेन बीजिकुले साप्तपौरुषं यावद्विवाहो निषिद्धः । स व्यामुष्यायणे व्यर्थः स्यात् । तस्मिन्सापिंड्यसत्त्वात् । अतोऽवश्यमेतत्सार्थक्यार्थं केवलदत्तको वाच्यः । तत्र सापिंड्यनिवृत्तेरुक्तत्वात् । अत एव शूरेण कुंतिभोजेन कृत्रिमदत्तायाः कुंत्याः सुतस्यार्जुनस्य शूरपुत्रवसुदेवदुहितुः सुभद्रायाः सापिंड्यनिवृत्तिं मनुवचनेनोक्त्वाऽस्य गौतमीयस्य बीजिसंतानजाया अपि निषेधमात्रपरत्वमेव चोक्त्वा अर्जुनेन सुभद्रा न परिणेया इत्याशंक्य वार्तिकोक्तं संबंधव्यवधानकल्पनाख्यं समाधानमाह **भट्टसोमेश्वरः** । यत्तु कश्चित् सोमेश्वरेण गौतमवचनात्कुंत्याः शूरकुलेऽपि साप्तपौरुषं सापिंड्यमुक्तमित्याह तद्ग्रंथाध्ययनाभावनिबंधनं । तेन हि सापिंड्यनिवृत्तिं पूर्वमुक्त्वा गौतमीयस्य जनककुले विवाहनिषेधपरत्वमुक्तं । न तु सापिंड्यबोधकत्वमिति । तथा **निर्णयसिंधुटीकायाम**न्यमते तु इत्युपक्रम्य "ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यः पंचमादि"ति गौतमकृतो बीजिकुले सप्तपूरुषं यावद्विवाहनिषेधो व्यामुष्यायणे सापिंड्य-

सद्भावेन व्यर्थ **इति** तत्सिद्धेश्च तस्य जनकसापिंड्यासत्त्वेन विवाहप्राप्तेस्तत्सार्थक्यादिति । तथा निर्णयसिंधावपि । **दत्तकविषये तूच्यते । तत्र गौतमः** "ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यः पंचमादिति" बंधुग्रहणान्न दत्तकमात्रपरमिदं । किंतु संतानेऽपि । एतत्क्षेत्रजादिसर्वद्व्यामुष्यायणपरं इति **हरदत्तः । अत्र स्मृतिचंद्रिका ।** नियोगाद्य उत्पादयति तस्या बीजिनोऽपि ऊर्ध्वं सप्तमादित्यर्थ इति । दत्तकस्य जनकविषयमेतदिति **सापिंड्यमीमांसायां ।** इत्यभिधाय पुरस्तादुक्तं मम तु पालककुले एकपिंडदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिंड्यं । बीजिनश्चेति गौतमोक्तेर्जनककुलेऽपि तावदेवेति । अत्र **संस्कारमयूखे** केवलदत्रिमस्य गौतमवचनाज्जनककुले साप्तपौरुषं सापिंड्यं । तन्निमित्तो विवाहनिषेधः । **व्यवहारमयूखे निर्णयसिंधुटीकायां** च—गौतमवचनाज्जनककुले साप्तपौरुषं यावद्वाचनिको विवाहनिषेधः **इति निर्णयसिंधौ**—गौतमीयं वचः सर्वद्व्यामुष्यायणपरमिति हरदत्तमतं । केवलक्षेत्रजपरमिति **स्मृतिचंद्रिकामतं ।** केवलदत्रिमपरमिति **सापिंड्यमीमांसामतं ।** केवलदत्तकपरं तत्संतानपरं च तेन पालककुले जनककुले क्रमेणैकपिंडदानक्रियान्वयित्वरूपमेकशरीरावयवान्वयित्वरूपं साप्तपौरुषं पांचपौरुषं **सापिंड्यमिति निर्णसिंधुमतं ।** ततश्चेत्यादिनिबंधेभ्यः केवलदत्रिमादीनां जनककुले केषांचिन्मतेन साप्तपौरुषपांचपौरुषसापिंड्यसत्त्वात्तत्प्रयुक्तविवाहनिषेधात् अन्येषां मतेन मनुवचनाज्जनककुले सापिंड्यनिवृत्त्या गौतमवचनाद्वाचनिकविवाहनिषेधाद्वा केवलदत्रिमादिपुत्रपौत्रादीनां तज्जनककन्यापौत्र्यादीनां च विवाहो न

स्यादिति प्राप्ते ब्रूमः । उक्तमतांतराणि प्रमाणभूतवचनानुपलब्धेर-प्रमाणान्येव स्वस्वमतोपष्टंभकानि स्वस्वेच्छाकल्पनामात्राणि । **गौतमसूत्रे**तूपक्रममारभ्य समाप्तिं यावत् व्यामुष्यायणकेव-लक्षेत्रजकेवलदत्रिमविषयकप्रवेशस्याप्यनुल्लेखात् । **किंच** । "पंच-मात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।" **इति याज्ञवल्क्येन** पितृमातृद्वारकसापिंड्यमुक्तं । "आसप्तमात्पंचमाच्च बंधुभ्यः पितृ-मातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा" **इति नार-देन** पितृमातृपितृबंधुमातृबंधुद्वारकसापिंड्यमुक्तं । तद्वद्गौतमेनापि "गृहस्थः सदृशीं भार्यां विंदेतानन्यपूर्वां यवीयसीं । असमानप्र-वरैर्विवाहः । ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यः पंचमादि"ति पितृमातृपितृबंधुमातृबंधुद्वारकसापिंड्यमुक्तं । तच्च यथौरसपुत्रे तथा तत्प्रतिनिधितया केवलदत्रिमादीनां प्रतिग्रही-तृकुले एवेति । न जनककुले कदाचिदिति । तत्सिद्धं, केवलदत्रि-मादिपुत्रपौत्रादीनां केवलदत्रिमादिजनककन्यापौत्र्यादिभिः सार्कं विवाहो भवत्येवेत्ययं सिद्धांत एव युक्ततर इति । तत्र केवलद-त्रिमादीनां तु जनककन्यां वर्जयित्वा पौत्र्यादिभिः सह भवति विवाहो बाधकाभावात् । जनककन्यायास्तु "सखी-सयोनि-स-गोत्रा-शिष्यभार्यासु स्नुषायां गवि च गुरुतल्पसमोऽवकर" **इति गौतमीये** । सखीसयोनिसगोत्रासु स्नुषायां गवि गुरुतल्पसमं गमनमिति गोत्रप्रवरमंजर्यां चोक्तसयोनित्वप्रयुक्तप्रतिषेधादित्यलं पल्लवितेनेति **केवलदत्रिमादीनां जनकगोत्रसापिंड्यवि-षयकविवाहोपयोगी निर्णयः** ॥

**४४ अथ केवलद्व्यामुष्यायणदत्तकादीनां दायविभागः ।** तत्र केवलानां । तथा च द्वादशपुत्रेषु प्रथमत औरसः । "एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरि"ति मनुवचनात् । पित्रा सह भिन्नजातीयानामौरसानां विभागमाह **याज्ञवल्क्यः** । "चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः । क्षत्रजास्त्रिद्व्येकभागा विट्जास्तु द्व्येकभागिन" **इति** । तथा **मनुः** "चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः । वैश्यापुत्रो हरेद्द्व्यंशमंशः शूद्रासुतो हरेत् ।" **इति** । **यत्पुनर्मनुः** "ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् । यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ।" इति । तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि प्रदत्तं स्यात्तद्विषयं । यदा तु प्रसाददानं नास्ति तदैकांशभागित्वमविरुद्धमिति **कुल्लूकभट्टाः** । औरसाभावे एकादशपुत्रप्रतिनिधयः । "न भ्रातरो न पितरः पुत्रा रिक्थहराः पितु"रिति मानवात् । मुख्यामुख्यपुत्राणां दायग्रहणे क्रममाह याज्ञवल्क्यः । औरसो धर्मपत्नीजः १ तत्समः पुत्रिकासुतः २ । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ३ ॥ गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ४ । कानीनः कन्यकाजातो मातामहसुतो मतः ५ ॥ अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ६ । दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ७ ॥ क्रीतश्च ताभ्यां विक्रितः ८ कृत्रिमः स्यात्स्वयंकृतः ९ । दत्तात्मा तु स्वयंदत्तो १० गर्भे विन्नः सहोढजः ११ ॥ उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत्सुतः १२ । पिंडदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ **उत्तर उत्तर इत्यर्थः । इति** । तत्रौरसपुत्रिकापुत्रसम-

प्रथमं केवलानां दायविभागः

वाये औरसस्यैव धनग्रहणे प्राप्ते **मनुरपवादमाह** । "पुत्रिकायां कृतायां तु यदि पुत्रोऽनु जायते । समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः" **इति** । तथा । अन्येषामपि पूर्वस्मिन्पूर्वस्मिन्सत्यपि उत्तरेषां पुत्राणां चतुर्थांशभागित्वमुक्तं वसिष्ठेन । "तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक" **इति** । दत्तकग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थं पुत्रीकरणाविशेषात् । तथाच **कात्यायनः** । "उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः । सवर्णा असवर्णास्तु ग्रासाच्छादनभाजना" **इति** । सवर्णा दत्तकक्षेत्रजादयः । असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवाः । ते तु औरसे सति न चतुर्थांशहराः । किंतु ग्रासाच्छादनभाजनाः । औरसाद्यभावे तु कानीनादीनामपि सकलपित्र्यधनग्रहणमस्त्येव । पूर्वाभावे परः परः इति वचनात् । दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे चान्नवस्त्रप्रदानं । **तथाच मनुः** । "एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमि"ति । क्षेत्रजस्य तु विशेषः । **मनुः** । "षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन्दायं पित्र्यं पंचममेव वे"ति प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठोंऽशः । एकतरसद्भावे पंचमोंऽशः **इति विवेकः** । तथा दत्तकस्य विशेषांतरमाह मनुः "उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः । स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ।" **इति** । **अत्र** "एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरि"ति औरसस्य सर्वोत्कर्षाभिधानात् । तेन नास्य समभागित्वं किंतु क्षेत्रजोक्तषष्ठांशभागित्वमेवास्य न्याय्यमिति कुल्लूकभट्टाः । औरसे सति दत्तकस्य वसिष्ठात् कातीयाच्चतुर्थांशभागित्वं ।

मानवात्षष्ठांशभागित्वमिति फलितोर्थः । केवलदत्त्रिमादीनां जनक-कुले तु रिकूथग्रहणाभावः । प्रागुक्तम् "गोत्ररिकूथे...स्वधे"ति मनुवचनादिति ॥ **विस्तरस्तु मनौ याज्ञवल्क्ये तट्टीकादौ द्रष्टव्यः । इत्ययं केवलदत्त्रिमादीनां दायविभागः ॥**

## २ अथ द्व्यामुष्यायणदत्तकादीनां दायविभागः ।

द्व्यामुष्यायणानां दायविभागः ।

याज्ञवल्क्यः । "अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिकूथी पिंडदाता च धर्मत" **इति । अस्यार्थः ।** यदासौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य परक्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिकूथहारी पिंडदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्रवर्तते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति । न बीजिनः । स च नियमेन बीजिनो रिकूथहारी पिंडदो वा **इति । तथोक्तं मनुना ।** "क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनो दृष्टौ बीजी क्षेत्रिक एव चे"ति । क्रियाभ्युपगमादिति । अत्रोत्पन्नमपत्यमुभयोरावयोरपि भवत्विति संविदंगीकरणादिति । **तथा पुनर्मनुः** "फलं त्वनभिसंधाय क्षेत्रिणा बीजिना तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी" फलं त्वनभिसंधायेति । अत्रोत्पन्नमपत्यमुभयोरावयोरस्त्वित्येवमनभिसंधायेति । **मिताक्षरायां ।** अत्र विशेषमाह **मनुः** "यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ । यस्य यत्पैतृकं रिकूथं स स गृह्णीत नेतरः" इति । "अपुत्रेण परक्षेत्रे० धर्मतः" इति **याज्ञवल्क्योक्त-**विषये यदा क्षेत्रिकस्य पितुः क्षेत्रजानंतरमौरसः पुत्रो भवति तदा त्वौरसक्षेत्रजौ एकरिक्थिनौ एकस्य पितुर्यद्यपि रिक्थार्हौ

भवतस्तथापि यद्यस्य जनकसंबंधि तदेव स गृह्णीयात् । न क्षेत्रजः क्षेत्रिकपितुरिति । **यत्तु** "षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसं विभजन्दायमि"ति तत्पुत्रबहुलस्य । यच्च याज्ञवल्क्येनोभयसंबंधिरिक्थहारित्वमुक्तं तत्क्षेत्रजपितुरौरसाभावे बोद्धव्यमिति **कुल्लूकभट्टाः। निर्णयसिंधुटीकायां** द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्रांतरासत्त्वे तस्मै पिंडं दद्यात् रिक्थं च गृह्णीयात् । न तत्सत्त्वे । उभयोरौरससत्त्वे तु न कस्मा अपि । प्रतिग्रहीत्रौरसांशचतुर्थभागं हरेत् । "उत्पन्ने त्वौरसे पुत्रे" इति वचनात् । इति । अत्र प्रमाणं महर्षिः कात्यायनो लौगाक्षिश्च । अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिंडं चैभ्यो दद्युरिति । **द्व्यामुष्यायणदत्तकादीनां दायविभागः ।**

**४६ अथ केवलद्व्यामुष्यायणदत्तकादीनां श्राद्धविचारः।** तत्र केवलानां दत्रिमादीनां जनककुले न जनकादिश्राद्धं । प्रागुक्त "गोत्ररिक्थे...स्वधे"ति मनुवचनेन तन्निवृत्त्युक्तेरिति **केवलदत्रिमादीनां श्राद्धविचारः ॥**

(१) प्रथमं केवलानां श्राद्धविचारः

**२ अथ द्व्यामुष्यायणदत्तकादीनां श्राद्धविचारः ।**

द्व्यामुष्यायणानां श्राद्धविचारः

द्व्यामुष्यायणदत्तकादिभिरुभयकुले पुत्रासत्त्वे श्राद्धं कार्यं। तत्सत्त्वे तूभयकुलेऽपि न कार्यं। तदाहतुर्महर्षिः कात्यायनो लौगाक्षिश्च । अथ ये दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेण द्व्यार्षेया जातास्ते द्व्यामुष्यायणा भवंति । यथा शौंगशैशिरीणां यानि चान्यान्येवं समुत्पत्तीनि कुलानि

भवंतीत्यादिना द्वयोः पित्रोः प्रवरानुक्त्वोक्तं ॥ **अथ** यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिकृथं हरेयुः पिंडं चैभ्यस्त्रिपुरुषं दद्युः । यद्युभयोर्न स्यादुभाभ्यामेव दद्युरेकस्मिंश्छ्राद्धे पृथगुद्दिश्यैकपिंडे द्वावनुकीर्तयेत्परिग्रहीतारं चोत्पादयितारं चातृतीयात्पुरुषात् । इति । द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्रान्तरासत्त्वे तस्मै पिंडं दद्यात् रिकृथं च हरेत् । न तत्सत्त्वे । यदा तूभयोरप्यौरसपुत्रसत्त्वं तदा कस्मा अपि पिंडं न दद्यात् । प्रतिग्रहीत्रौरसांशस्य चतुर्थं भागं हरेत् । "उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः । सवर्णा असवर्णाश्च ग्रासाच्छादनभाजना" **इति कात्यायनोक्तेः** सवर्णाः क्षेत्रजदत्तकाद्या **इति विज्ञानेश्वरः** । यदा तु उभयोः पुत्राभावस्तदा द्वयोरपि पित्रोरापरपक्षिकाद्येकमेव श्राद्धं तंत्रेण कुर्यात् । तत्रैकः पिंडः एकस्मिन्नेव पिंडे द्वयोः पित्रोः पृथगुद्देशः । तत्र प्रथमं परिग्रहीतुः पश्चादुत्पादयितुरुद्देशः । अर्घ्यादावप्ययमेव न्यायः । अत्रापत्यपदमधिकार्युपलक्षकं । पौत्रादिसत्त्वे रिकृथग्रहणासंभवात् । **इति तदर्थः । आपस्तंबोऽपि** "यो द्विपिता स्यादेकैकस्मिन्पिंडे द्वौ द्वावुपलक्षयेदि"ति । **बौधायनोपि** "द्विपितुः पिंडदानं स्यात्पिंडे गोत्रे च नामनी । त्रयश्च पिंडाः षण्णां स्युरेवं कुर्वन्न मुह्यति" **इति । नारदस्मृतौ तु** "द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिंडोदके पृथक् । रिकृथादर्धं समादद्युर्बीजिक्षेत्रिकयोस्तथे"ति । अत्र पृथगित्यभिधानादेकैकस्मिन्पितृवर्गे त्रयस्त्रयः पिंडा इत्येवं षट्पिंडाः प्रदेया इत्युक्तं भवति । **अत एव देवलस्मृतौ** "द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिंडोदके पृथक् । षण्णां देयस्तु षट्पिंडा एवं कुर्वन्न मुह्यति" **इति** । यथागृह्यं व्यवस्था

चेत्यवगंतव्यमिति **हेमाद्रिः** । पिंडभेदपक्षे द्व्यामुष्यायणपुत्रस्या-परपक्षिकादौ पित्रे एकः पितामहप्रपितामहयोर्द्वौ द्वाविति पंच । तत्पौत्रस्य पितुरेकः पितामहस्य चैक इति द्वौ । प्रपितामहस्य द्वाविति **चत्वारः** । प्रपौत्रस्य तु त्रय एवेति । **केचित्तु** एकै-कस्मिन्पिंडे द्वौ द्वाविति कुंडगोलकपरं वर्णयंति । तत्तु न स्मृत्यंत-रसंवादि । **इति हेमाद्रौ मयूखे चेति ॥ अथ सपिंडन-प्रकारमाह हेमाद्रौ कार्ष्णाजिनिः** । यावंतः पितृवर्ग्याः स्युस्तावद्भिर्दत्तकादयः । प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह । द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समं । चतुर्थपुरुषे छंदस्तस्मादेषा त्रिपौरुषी । साधारणेषु कालेषु विशेषो नास्ति वर्गिणां । मृताहे त्वेकमुद्दिश्य कुर्युः श्राद्धं यथाविधी"ति ॥ **अस्या-र्थमाह हेमाद्रिः** । दत्तकादयो जनकपालकयोः कुले प्रेतानां स्वस्ववर्गीयैः सपिंडनं कुर्युः । दत्तकानां पुत्रास्तु पितुर्दत्तकस्य पितृभ्यां जनकपालकाभ्यां स्वपितामहाभ्यां सपिंडनं कुर्युः । तेषां पौत्राः स्वपितरं दत्तकेन पितामहेन तज्जनकेन च सपिंडयेयुः । चतुर्थोऽपि तत्कुलस्थ एव । तेषां प्रपौत्रास्तु दत्तकस्य प्रपितामहस्य पालककुलस्थं चतुर्थं योजयेन्न वा । **छंद इच्छा** । दर्शमाहालयादौ तु द्वयोः पित्रोः पितामहयोः प्रपितामहयोर्वा श्राद्धं देयं । तत्र द्वयोः पित्राद्योः पृथक् पिंडदानं द्वयोरुद्देशेनैको वेति हेमाद्रिकृतकार्ष्णाजिनिवा-क्यार्थः । एकमुद्दिश्येति प्रतिसंवत्सरमेकोद्दिष्टमेवेति मृताहे एको-द्दिष्टाचारपरमिति **निर्णयसिंधुटीकायां** ॥ यथेदं द्विपितृकस्य पितृपार्वणद्वयं दर्शितं तथा तुल्यन्यायात् । "मातामहानामप्येव"-**मिति कातीयश्राद्धसूत्रात्** । "पितरो यत्र पूज्यंते तत्र

मातामहा ध्रुवमि"ति स्मृतेश्च द्व्यामुष्यायणदत्तकादीनां प्रतिग्रहीत्रीपित्रादीनां जननीपित्रादीनां च पार्वणद्वयं । उभयमातामहपार्वणमित्यर्थः । अत्रापि प्रथमं प्रतिग्रहित्रीपित्रादीनां पश्चाज्जननीपित्रादीनां निर्देशो बोध्यः । एवं यच्छाखीयानां आभ्युदयिकापरपक्षिकादौ मातृमातामाहीपार्वणे भिन्ने तेषामप्ययमेव न्यायः । इति **केवलद्व्यामुष्यायणदत्तकादीनां श्राद्धविचारः ॥**

**४७ अथ केवलद्व्यामुष्यायणदत्तकादीनामाशौचविचारः ।**

(१) केवलानां आशौचविचारः

तत्र केवलदत्रिमादीनां जनककुले जनकपितृमातृसोदरसपिंडादीनां च मरणे परस्परमाशौचं नास्त्येव । प्रागुक्त "गोत्ररिक्थे" इति मनुवचनेन पितृत्वमातृत्वपुत्रत्वादिसंबंधस्य निवृत्त्युक्त्या भार्यापुत्रशब्दयोः संबंधिशब्दत्वाद्यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदमाशौचमिति मिताक्षरासिद्धांतात् । "गोत्ररिक्थे" इति मनुवचनं तु प्राक्केवलानां गोत्रप्रवरविचारे व्याख्यातं । ननु "बैजिकादभिसंबंधादनुरुंध्यादघं त्र्यहमि"ति मनुवचनेन बैजिकसंबंधाविशेषाद्वाचनिकाशौचस्यानिवार्यत्वात्केवलदत्रिमादीनां जनकमातापित्रोश्च मृतौ परस्परं त्रिरात्रमाशौचं भवत्येवेति चेन्न "गोत्ररिक्थे" इति मानवेनैव जन्यजनकसंबंधस्यापि निवृत्तेः प्रागभिहितत्वात् । न चास्य दत्रिमवाक्यस्य बैजिकवाक्येन बाधो वाच्यः । दत्रिमवचनस्य विशेषशास्त्रत्वात् बैजिकवचनस्य सामान्यशास्त्रत्वाच्च बैजिकवचनेन दत्रिमवचनस्य बाधो दूरतरः प्रत्युत दत्रिमवचनेन बैजिकवचनस्य बाधो भवितुमुचित एव । "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।" इति न्यायात् ।

ततश्च बैजिकवचनस्यात्राप्रवृत्तेर्दत्तकातिरिक्तस्थले क्षेत्रजादौ सावकाशत्वात्। **तथोक्तं दत्तकमीमांसायां। यत्तु** "बैजिका० त्र्यहमि"ति तदपि "व्यैपैति ददतः स्वधे"त्यनेनापोदितं। दत्तकातिरिक्तस्थले तस्य सावकाशत्वादिति। तथाचात्र दत्तकमीमांसाटीकायां बालविबोधिन्यां **तदपीति**। तथाच "बैजिकादभिसंबंधादिति" सामान्यवचनस्य "गोत्ररिक्थे जनयितुरि"त्यनेनापवादादित्यभिप्रायः। दत्तकातिरिक्तस्थले **इति**। तथाच तद्वचनस्य "अन्यपूर्वा" जातापत्यविषयत्वमवतिष्ठते। **अत एव कुल्लूकभट्टः**। बैजिके तु परपूर्वाभार्यायामपत्योत्पत्तौ त्र्यहमाशौचं भवतीति तद्वचनं व्याख्यातवानिति **भरतचंद्रशिरोमणिः।** अन्यैरपि मनुस्मृतिव्याख्यातृभिरित्थमेव प्रतिपादितं। तथाचात्र **मेधातिथिः।** बैजिकादभिसंबंधात्। बीजनिमित्तको बैजिकः। अभिसंबंधः अपत्योत्पत्तिः। अतस्तत्र कथं नानुरुंध्यान्नानुवर्तेत। अवमाशौचं। त्र्यहं। यादृशं च शुक्रनिरसनेन कृतस्नानस्याशुचित्वं न तादृशमेव प्रसवे। **अपि तु त्र्यहमिति।** बैजिकादिति। स्वस्त्रीव्यतिरिक्तासु स्त्रीषु जनितानां प्रसवमरणयोर्बीजसंबंधात्त्र्यहमघमाशौचमनुरुंध्यात् बैजिकादिति दशाहाशौचाभावार्थं। बीजमात्रसंबंधो न तु स्वभार्याद्वाराऽपि संबंध **इति तात्पर्येणोक्तमिति सर्वज्ञनारायणरामचंद्रौ**॥ बैजिके तु संबंधे परपूर्वाभार्यायामपत्योत्पत्तौ त्र्यहमाशौचं। **तथाच विष्णुः।** परपूर्वाभार्यासु त्रिरात्रं रेतःपातिनामाशौचं प्रकृतमपि जननप्रकरणे प्रसंगात्तदनुगुणतयोक्तं। यत्र रेतःपातमात्रेण स्नानं तत्रापत्योत्पत्तौ त्रिरात्रमुचितमिति **कुल्लूकः**। यत्र पुनर्जनने बीजनिमित्तमात्र

एवाभिसंबंधो न शाश्वत इति **गोविंदराजः** । सपिंडतादि-संबंधासत्त्वेन बीजं रेतःसंबंधहेतुरिति **राघवानंदः** । त्रिरात्रानुवृत्तौ **विष्णुस्मृतावपि**—"अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु चे"ति ॥ **शंखोऽपि** "अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । परपूर्वासु च स्त्रीषु त्र्यहाच्छुद्धिरिहेष्यते" **इति** ॥ **बृहस्पतिरपि** "अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । मृतेष्वाप्लुत्य शुध्येत्तु त्रिरात्रेण द्विजोत्तमः" **इति** । **हारितोऽपि** "परपूर्वासु भार्यासु पुत्रेषु मृतकेषु च । मातामहे त्रिरात्रं स्यादेकाहं त्वासपिण्डतः ।" **इति** बार्हस्पत्यहारीत-**वचनयोश्च मूलं मृग्यं** । यदा तु पितुस्त्रिरात्रं तदा सपिण्डानामेकरात्रं । **यथाह मरीचिः** "सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितु"**रिति** । **याज्ञवल्क्येन** तु क्षेत्रजाद्यनौरसानां तन्मातापित्रोश्च प्रसवमरणयोः परस्परमेकाहमाशौचमुक्तं ॥ **तथाहि** "एकाहानुवृत्तौ" "अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च" **इति** ॥ यदा पितुरेकाहं तदा सपिण्डानामाशौचाभाव एव । यथाह प्रजापतिः "अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता" इति । एकरात्रेणेति पाठो यदि मूलसंमतः स्यात्तदानीं स एव युक्ततर इति भाति । **नचायं विरोधः** संपद्यते इति वाच्यं । सन्निधिविदेशस्थापेक्षया व्यवस्थया विरोधस्य परिहृतत्वात् । तथोक्तं मिताक्षरायां । अहरित्यनुवर्तते । अनौरसाः क्षेत्रजदत्तकादयः तेषु जातेषु उपरतेषु वाऽहोरात्रमाशौचं । तथा स्वभार्यास्वन्यगतास्वन्यं प्रतिलोमव्यतिरिक्तमाश्रितास्वतीतासु चाहोरात्रमेव

न पुनः सत्यपि सापिण्ड्ये दशरात्रं । प्रतिलोमाश्रितासु चाशौचाभाव एव । पाखण्ड्यनाश्रिताः स्तेना इत्यनेन प्रतिषेधात् । एतच्च भार्यापुत्रत्वशब्दयोः संबंधिशब्दत्वाद्यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदमाशौचं । सपिण्डानां त्वाशौचाभाव एव । **अत एव प्रजापतिः ।** "अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता" **इति ।** स्वैरिण्याद्यास्तु यमाश्रितास्तस्य तु त्रिरात्रमेव । **यथाह विष्णुः** "अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु चे"ति । त्रिरात्रमत्र प्रकृतं । अनयोश्च त्रिरात्रैकरात्रयोः सन्निधिविदेशस्थापेक्षया व्यवस्था । यदा तु पितुस्त्रिरात्रं तदा सपिण्डानामेकरात्रं । **यथाह मरीचिः ।** "सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितु"**रिति ।** अत्र "अनौरसाः क्षेत्रजदत्तकादयः ।" इति । दत्तकग्रहणं दत्तकादिषु उपचारवृत्त्या अनौरसत्वज्ञापनार्थं न पुनः प्रकृताशौचप्रतिपादनार्थमिति ज्ञेयं । **अस्य याज्ञवल्क्यवचसो** "बैजिकादभिसंबंधा"दिति मनुवचनेन तुल्यतया समानकक्षत्वात् । दत्तकाशौचरूपप्रकरणाभावात् । अस्य प्रकरणस्य अन्यपूर्वाप्रसूतानौरसाशौचविषयत्वात् । दत्तकाशौचस्य दत्तकलक्षणकथनेनैव गतार्थत्वात् । अत एव न केनापि स्मृतिकर्त्रा दत्तकाशौचं पृथगभिहितं । **शुद्धिमयूखे मिताक्षरोक्त एवाशयः । षडशीतौ कौशिकाचार्या अपि** "अनुलोमाश्रितायास्तु भार्यायाः प्रसवे मृतौ ॥ पुत्रस्यानौरसस्यापि समीपे त्रिदिनाच्छुचिः । अन्यत्र तु दिनादन्यपूर्वापत्न्या दिनत्रयात् । बैजिकादभिसंबंधादनुरुंध्यादघं त्र्यहमि"ति । स्पष्टमस्य "बैजिका-

दिति" चरणेनान्यपूर्वा प्रसूतानौरसाशौचविषयत्वमुक्तं **षडशीतिश्लोकव्याख्यानावसरे नंदपंडितैः।** पुत्रस्यानौरसस्यापीति। अनौरसाः क्षेत्रजो गूढजः कानीनः सहोढः पुत्रिकापुत्रश्चेति तेषां प्रसवे उत्पत्तौ क्रीतकृत्रिमदत्तकस्वयंदत्तापविद्धाग्रहीतुर्भवंतीत्यर्थः। पौनर्भवस्त्वन्यपूर्वाप्रसव एव वक्ष्यते इत्यादि भेदं प्रदर्श्य पुनः। "औरसं वर्जयित्वा तु सर्ववर्णेषु सर्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। आशौचं तु त्रिरात्रं स्यात्समानमिति निश्चयः" **इति** सर्वदा सर्वकालं उपनयनाद्यनंतरमपि। इत्यनेन ब्राह्मेणसर्वेषामविशेषोपादाना**दिति।** इत्यंतेन दत्तकादीनामपि त्रिरात्राशौचमुक्तं। तन्मूलासंगतत्वाद्दत्तकमीमांसास्थस्वकीयलेखविरुद्धत्वा**दुपेक्ष्यं। वस्तुतस्तु** ब्राह्मवचनान्यपि अन्यपूर्वाप्रसूतानौरसाशौचविषयकान्येवेति स्पष्टं प्रतीयते तद्वचनस्वारस्या**दिति। निर्णयामृते मिताक्षरोक्त एवाशयः। ननु द्वैतनिर्णये** दत्तकपुत्रमरणे सापिंड्याद्दशाहमाचरंति तत्प्रतिग्रहीतृपत्नीपुत्रांतरादयः **सर्वे इति शिष्टाचारः।** तत्र विरुद्धं याज्ञवल्क्यवाक्यमित्युपक्रम्य याज्ञवल्क्यविष्णुप्रजापतिमरीचिप्रभृतीनां वचनानि दत्तकादीनां वयोऽवस्थाशौचविषयकाणीति व्यवस्थापितमिति चेन्न द्वैतनिर्णयकृतां प्रवृत्तेरुद्देशस्तु केवलं विरुद्धत्वेनोपस्थितयाज्ञवल्क्यवचसो व्यवस्थाकरणमिति। यदि तद्विरुद्धमेव न समायाति। कुतोऽयं महत्प्रयाससाध्यो व्यवस्थाकरणप्रयत्नः। कथं न विरुद्धमिति त्वनुपदमेवोल्लिखितं **तत्पश्यंतु भवंतः। मदनपारिजाते तु।** अनौरसेषु पुत्रेषु क्षेत्रजदत्तकादिषु जातेषु मृतेषु वा सन्निधौ पित्रोस्त्रिरात्रं सपिंडानामेकाहः। असन्निधौ तु पित्रोरेकाहः। सपिंडानां सद्यः।

शौचमिति निर्णयसिंधौ धर्मसिंधौ प्रयोगदर्पणे स्मृत्यर्थसारे रेणुकारिकासु त्रैय्यंबकीये भट्टोजीदीक्षितकृताशौचनिर्णये आशौचसंग्रहे इत्यादिग्रंथेषु **मदनपारिजातोक्त एवाशयः। विस्तरभिया नोद्धृतो जिज्ञासुभिस्तत्र तत्र द्रष्टव्यः।** तद्वयमेवाशयः समादरणीय इति चेन्न। यद्यप्येते निबंधारो विद्वन्मान्यास्तथाऽपि तेषामाशयो नादरपथमारोहति। मनुयाज्ञवल्क्यस्मृतिविरोधात्। याज्ञवल्क्यवचनस्य तत्रत्यमिताक्षरायाश्च अन्यपूर्वाप्रसूतविषयत्वेन तन्मूलकस्यैतेषां विद्वन्मान्यानामाशयस्य विनिगमनाविरहत्वप्रसक्तिर्दुर्निवारैवेत्यलं **पल्लवितेनेति। तत्सिद्धं जनककुले केवल**दत्रिमादीनामाशौचलेशोऽपि नास्तीति।

**पालककुले** तु केवलदत्रिमादीनां पालकपितृमातृसपिण्डादीनां च मरणे परस्परं यथायथं वयोऽवस्थाशौचं जात्याशौचं चौरसवत्समानमेव। पालकासाधारणपुत्रत्वात्। तदेकगोत्रत्वात्। तदेकसापिंड्यात्। शिष्टाचाराच्च। **एते हि हेतवः पूर्वं प्रपंचिताः॥ इति केवलदत्रिमादीनामाशौचविचारः॥ अथ** व्यामुष्यायणदत्तकादीनां जनकपालकोभयमातृपित्रादिसपिण्डानां च मरणे उभयकुले परस्परं सगोत्रसपिण्डत्वाद्यथायथं वयोऽवस्थाशौचं जात्याशौचं चौरसवत्समानमेवेति। अत्र केवलव्यामुष्यायणदत्तकाशौचविचारे "आदि"पदेन क्रीतकृत्रिमस्वयंदत्तापविद्धा ग्राह्याः। तथा "आशौचपदं" जननमरणनिमित्ताशौचपरं॥ उपनयनात्प्राक्कालीनमाशौचं वयोऽवस्थाशौचमित्यभिधीयते॥ उपनयनोत्तरकालीनमाशौचं

व्यामुष्यायणाना-
माशौचविचारः।

जात्याशौचमित्यभिधीयते इति ध्येयं ॥ इति द्व्यामुष्याय-णदत्तकादीनामाशौचविचारः ॥

४८ अथ केवलद्व्यामुष्यायणदत्तकादीनां दानप्रतिग्रहप्रयोगः । तत्रादौ तत्संबंधि किंचिदुपवर्ण्यते । दानप्रतिग्रहप्रयोगाश्च त्रयः । तत्र शौनकोक्तो ऋग्वेदिनां । बौधायनोक्तस्तैत्तिरीयादिकृष्णयजुर्वेदिनां । वासिष्ठोक्तो माध्यंदिनादिशुक्लयजुर्वेदिनां सामवेदिनामाथर्ववेदिनां चेति शाखाभेदेन व्यवस्थेति प्रागुक्तमेव । अयं च होमव्यतिरिक्तो दानवर्जितश्च प्रतिग्रहीतुर्विधिः क्रीतकृत्रिमापविद्धस्वयंदत्तेषु यथायथं बोध्यः । स्वयंदत्ते तु दानहोमावपि भवतः । मनुना तत्तदुपसर्गेण बोधनात् । निर्णयसिंधुटीकायामपि । दत्तकः अत्र होमान्यो ग्रहणापादनप्रतिग्रहीतृगोचरः सर्वोऽपि नियमः क्रीतकृत्रिमापविद्धस्वयंदत्तेष्वपि यथासंभवमावश्यकः । अदृष्टार्थत्वात् । तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति वासिष्ठे क्रयपरित्यागयोरुपादानात् । स्वयंदत्ते तु होमोऽपि प्रतिग्रहसत्त्वात् । यत्तु द्वैतनिर्णये प्रजोत्पादनविधेर्नित्यत्वेन प्रयोगविधिप्रयोज्यहोमाद्यंगेषु यथाशक्तिन्यायः । तन्न प्रजोत्पादनविधेःस्वरूपतो नित्यत्वेऽपि फलतः काम्यत्वाद्दत्तकादिषूत्पत्स्यमानपुत्रत्वस्य होमादिजन्यत्वाच्च सांगएव प्रतिग्रहविधिरनुष्ठेयः । तदेतत्सर्वं निर्णयसिंधौ तट्टीकायां च स्पष्टं इति ॥ बौधायनसूत्रेप्येवं ॥

(१) अथ शौनकोक्तः पुत्रग्रहप्रयोगः ॥ तत्र मूलवाक्यानि निर्णयसिंधौ पारिजाते शौनकः । शौनकोहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमं । अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च । वाससी कुण्डले दत्वा उष्णीषं चांगुलीयकं ॥ १ ॥ आचार्यं

धर्मसंयुक्तं वैष्णवं वेदपारगं। बर्हिःकुशमयं चैव पालाशमिध्ममेव च ॥ २ ॥ एतानाहृत्य बंधूंश्च ज्ञातीनाहूय यत्नतः ॥ बंधूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः। अन्वाधानादि यत्तंत्रं कृत्वाऽज्योत्पवनादिकं ॥ ३ ॥ दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत्। दाने समर्थो दाताऽस्मै ये यज्ञेनेति पंचभिः ॥ ४ ॥ देवस्यत्वेति मंत्रेण हस्ताभ्यां परिगृह्य च। अंगादंगेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥ ५ ॥ गृहमध्ये तमादाय चरुं कृत्वा विधानतः। यस्त्वा हृदेत्यृचा चैव तुभ्यमग्नऋचैकया ॥ ६ ॥ सोमोददिदित्येताभिः प्रत्यर्चं पंचभिस्तथा। स्विष्टकृदादिहोमं च कृत्वा शेषं समापयेत् ॥ ७ ॥ ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः। तदभावेऽसपिंडो वा अन्यत्र तु न कारयेत् ॥ ८ ॥ क्षत्रियाणां सजातौ वा गुरुगोत्रभवोपि वा। वैश्यानां वैश्यजात्यां तु शूद्राणां शूद्रजातिषु ॥ ९ ॥ सर्वेषां चैव जातीनां ज्ञातिष्वेव च नान्यतः। नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ॥ १० ॥ बहुपुत्रेण कर्तव्यं पुत्रदानं च यत्नतः। दक्षिणां गुरवे दत्वा यथाशक्ति द्विजोत्तमः ॥ ११ ॥ **इति शौनककारिकायां पुत्रप्रतिग्रहविधिः ॥ अत्र निर्णयसिंधुटीका ॥**

अपुत्रो मृतपुत्रो वेति। उद्देश्यविशेषणतया उपादेयमपि राजत्ववदधिकारिसंकोचकं। वंध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च। इति वाक्यांतरे वंध्यात्वाद्यपि तथा। अतो वंध्या वेति न शौनकीयमिति स्पष्टं प्रतीयते ॥ पुत्रार्थमिति। पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय चावेद्येति **वासिष्ठात्।** राजा च ग्रामपाल **इत्याहुः।** गणेशार्चनादिनांदीश्राद्धांतंतूभयोरपि । नांदीश्राद्धांतंतूभयोरिति **व्यवहारमयूखेऽपि ॥** वासंसी कुण्डले दत्वेति। **प्रयोगपारि-**

**जाते नंदपंडितीये चायमेव पाठः।** इदं वरणविधिना वृताचार्याय दानं "दत्वा" इत्यस्य "आदाय" इत्यनेन समानकर्तृकत्वात्। न तु प्रतिग्रहीष्यमाणपुत्राय। दातृसमक्षमिदानीमगमनात्। आचार्याय तद्दानं च धृतवासोद्वयोष्णीषकुंडलस्याचार्यस्य दातुर्गृहे नयनार्थं। तेन प्रतिग्रहीतुरापत्तिशून्यत्वं व्यज्यत इत्यप्याहुः। पुत्रार्थमपि वाससी कुण्डले उष्णीषमंगुलीयकं च संपाद्य मूर्धनीत्यनंतरं "वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतं" **इति ग्रंथांतरावधृतशौनकात्।** छायावहं सदृशं। तत्र "वस्त्रादिभि"रित्यादिना कुण्डलादिग्रहः। दत्वेत्यस्याचार्याधीनं कृत्वेत्यर्थे तु तद्दानं लुप्यते। "वाससी कुण्डले छत्रमुष्णीषं चांगुलीयकमि" ति पठतां मते एव। अतो "वस्त्रादिभिरलंकृत्येति" "वाससी कुण्डले" इति च वचनद्वयं न शौनकीयमिति स्पष्टं प्रतीयते। ब्राह्मणान् त्रीन्बहुवचनात्। अन्वाधानादि आचार्यकृत्यं। **दातुरिति।** ग्रहीतृकृत्यं। याचयेदितिणिजविवक्षितः। आचार्यादिरन्य एव कश्चन याचेत। अयं तु याचयेदिति सविवक्षित इत्यन्ये। दाने इति दातृकृत्यं। दत्वेति क्त्वाप्रत्ययः। दातेति तृज्पाठे दद्यादिति शेषः। दाने समर्थ इति च पद्वया अनुमत्यनपेक्षाव्यंजकं। पंचऋगंते। इमं पुत्रं तुभ्यमहं संप्रददे न मम इति दद्यादित्यर्थः। "प्रतिगृह्णीत मानवं सुमेधस" **इति मंत्रलिंगात्।** द्व्यामुष्यायणे च न मम इत्यस्य त्यागः। देवस्यत्वेति प्रतिग्रहीतृकृत्यं। चकारेण स्वशाखोक्तकामस्तुतिसमुच्चयः। आदाय धृतवस्त्रद्वयकुण्डलोष्णीषादिं वाद्यादिघोषपूर्वकमानीय। चरुमिति॥ आचार्यकृत्यं॥ होममंत्रानाह। यस्त्वाहृदा इत्यृचा चैवेति। एवं सप्तभिर्मंत्रैः

सप्तचर्वाहुतीर्हुत्वेत्यर्थः । अत्र बह्वृचानां शौनकोक्त एव विधिः । तत्र यस्त्वाहृदा इत्येकया ऋचा होमः ॥ **शौनकोक्तौ** यस्त्वा हृदा व्यृचा चैव पठित्वा ऋक्‌द्वयकरणको होम इति वदतां महासाहसं । आज्योत्पवनादिकमित्यादिना बर्हिषि हविरासादनांतं लभ्यते ॥ शेषे **कश्चिदंशः पूर्वं व्याख्यातः । कश्चिदंशः सुस्पष्टः । इति ॥ अथ प्रयोगः ॥** प्रतिग्रहीतुः पूर्वेद्युरुपवासः । परेद्युर्बंधूनाहूय । प्रतिग्रहं राज्ञे ( राजनियुक्तग्रामाऽधिकारिणे ) कथयित्वा । स्नात्वा । आचम्य । पवित्रे धृत्वा । प्राणानायम्य । देशकालौ संकीर्त्य । **संकल्पः । तत्रादौ केवलदत्तकप्रतिग्रहसंकल्पः ।** ग्रहीष्यमाणपुत्रस्य अमुकगोत्र–अमुकशर्मणां तज्जनकादीनां च परस्परं विद्यमानपितृपुत्रभावादितत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तिपूर्वकं अमुकगोत्र–अमुकशर्मणामस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादि तत्तत्संबंधप्रवृत्तिद्वारा तत्तत्प्रयुक्तकार्यप्रवृत्तये पुत्रं प्रतिग्रहीष्ये ॥ **केवलस्वयंदत्तेऽपि एष एव संकल्पः । अथ द्व्यामुष्यायणप्रतिग्रहसंकल्पः ।** ग्रहीष्यमाणपुत्रस्य अमुकगोत्राऽमुकशर्मणां तज्जनकादीनां च परस्परं पितृपुत्रभावादिसंबंधसत्त्वेऽपि अमुकगोत्राऽमुकशर्मणामस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिध्यर्थं पुत्रं प्रतिग्रहीष्ये ॥ **द्व्यामुष्यायणस्वयंदत्तप्रतिग्रहसंकल्पोप्येष एव । इति संकल्प्य ॥** गणेशपूजनादिनांदीश्राद्धान्तं विधाय ॥ आचार्यं वृत्वा मधुपर्केण पूजयेत् ॥ मधुपर्कांते त्रीन्ब्राह्मणान्बंधुवर्गांश्चान्नेन भोजयेत् ॥ अथाचार्यो यजमानानुज्ञया पुत्रप्रतिग्रहांगहोमं करिष्ये **इति संकल्प्य ॥**

अग्निं प्रतिष्ठाप्य ॥ चक्षुषी आज्येनेत्यंतमुक्त्वा । सकृदग्निं सूर्यासावित्रीं षड्वारं चरुणा । अग्निं वायुं सूर्यं प्रजापतिं चाज्येन शेषेण स्विष्टकृतं । इत्यन्वाधाय ॥ अष्टाविंशतिमुष्टीस्तूष्णीं निरूप्य । तथैव प्रोक्ष्य । आज्योत्पवनादिबर्हिषि हविरासादनान्तं कृत्वा ॥ आचार्यप्रभृतिब्राह्मणैः सह दातुः समक्षं गच्छेत् । दातारं प्रति एतस्मै पुत्रं देहीति आचार्यादिः कश्चन याचेत । एवं ब्राह्मणद्वारा याच्ञां कारयेत् । पुत्रं देहीति । स्वयं वा याचेत ॥ **ततो दाता ।** आचम्य । पवित्रे धृत्वा ॥ प्राणानायम्य ॥ देशकालौ संकीर्त्य । **अथ केवलदत्तकदानसंकल्पः ।** अमुकगोत्रामुकशर्मणां अस्मदादीनां अस्य पुत्रस्य च परस्परंविद्यमानपितृपुत्रभावादितत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तये प्रतिग्रहीतुरस्यच पुत्रस्य परस्परं पितृपुत्रभावादिसंबंधसिद्धये अमुकगोत्रामुकशर्मणे अस्मै पुत्रं दास्यामि । इति । केवलस्वयंदत्ते तु । अमुकगोत्रामुकशर्मणामस्मज्जनकादीनां मम च परस्परं० प्रतिग्रहीतुर्मम च परस्परं० अमुकगोत्रायामुकशर्मणे अस्मै अहमात्मानं पुत्रत्वेन दास्यामि ॥ इति ॥ **अथ द्व्यामुष्यायणदत्तकदानसंकल्पः ।** अमुकगोत्रामुकशर्मणामस्मदादीनां अस्य पुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसत्त्वेऽपि प्रतिग्रहीतुरस्य पुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिद्धये अमुकगोत्रायामुकशर्मणे अस्मै इमं पुत्रं दास्यामि । इति ॥ **द्व्यामुष्यायणस्वयंदत्ते तु ।** अमुकगोत्रामुकशर्मणामस्मज्जनकादीनां, मम च परस्परं० प्रतिग्रहीतुर्मम च परस्परं० अमुकगोत्रायामुकशर्मणे अस्मै अहमात्मानं पुत्रत्वेन दास्यामि । **इति ॥** गणेशपूजनादिनांदीश्राद्धांतं कृत्वा । प्रतिग्रहीतारं यथा-

शक्ति संपूज्य ॥ येयज्ञेनेतिपंचानां नाभानेदिष्ठो मानवो विश्वेदेवा-स्त्रिष्टुप् पंचम्यनुष्टुप् पुत्रदाने विनियोगः । ॐ ये यज्ञेन दक्षिणया समक्ता० । इति ऋक्पंचकांते । इमं पुत्रं तव पैतृकऋणापाकरण-पुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं संप्रददे न मम ॥ **इति केवलदत्तके** ॥ अहमात्मानं पुत्रत्वेन तव पैतृक० संप्रददे ॥ नाहं जनकपितुः ॥ **इति केवलस्वयंदत्ते** ॥ ममैत-त्पुत्रद्वारा संभाव्यमानपैतृकऋणापाकरणपुन्नामनरकत्राणसिद्धिस-त्त्वेऽपि तव पैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वर-प्रीत्यर्थं इमं पुत्रं तुभ्यमहं संप्रददे । इत्येतावन्मात्रोच्चारः । **इति द्व्यामुष्यायणदत्तके** ॥ मद्द्वारा मज्जनकपितुः संभाव्यमान० सिद्धिसत्त्वेऽपि तव पैतृक० अहमात्मानं पुत्रत्वेन तुभ्यं संप्रददे । इत्येतावन्मात्रोच्चारः । **द्व्यामुष्यायणे** "न मम" "नाहं जनक-पितुः" इतीमौ त्यागौ न भवतः । **इति द्व्यामुष्यायणस्वयं-दत्ते** ॥ **केवलद्व्यामुष्यायणदत्तके** । प्रतिगृह्णातु पुत्रं भवान् । **केवलद्व्यामुष्यायणस्वयंदत्ते** । प्रतिगृह्णातु मां पुत्रत्वेन भवान् ॥ इत्युक्त्वा **दाता** प्रतिग्रहीतृहस्ते जलं क्षिपेत् । दानसांगतासिध्यर्थं दक्षिणां च दद्यात् ॥ प्रतिग्रहीता देवस्य त्वा० भ्यां ॥ प्रतिगृह्णामि । इति । पुत्रं हस्तद्वयेन गृहीत्वा स्वशाखोक्तां कामस्तुतिं पठित्वा । स्वांके उपविश्य । ॐ अंगादंगात्सं० शतं । इति मंत्रेण मूर्धनि जिघ्रेत ॥ ततस्तं सुतं युवं वस्त्राणि० इति मंत्रेण वस्त्रं परिधाप्य । तूष्णीमुष्णीषं बध्वा । कुंकुमादिना तिलकं कृत्वा ॐ हिरण्यरूप० इत्यादिना कुण्डलाभ्यामलंकृत्य । छत्रेणाच्छादितं बालं नृत्यगीतवाद्यैः ॐ स्वस्तिनोमिमात० इत्यादिमंत्रैश्च स्वगृहमानीय । **पादौ प्र-**

क्षाल्य। आचम्य ॥ आचार्यदक्षिणतः स्वयं। स्वदक्षिणे भार्यां। तदुत्संगे दक्षिणतो वा पुत्र इत्युपविशेत्। तत आचार्यो बर्हिरास्तरणाद्याज्यभागान्ते। चरुमवदाय। यस्त्वा हृदा इत्यात्रेयो वसुश्रुतोग्निस्त्रिष्टुप् पुत्रप्रतिग्रहांगहोमे **विनियोगः।** ॐ यस्त्वाहृदा० इत्येकयैव ऋचा जुहुयात्। यजमानः अग्नय इदं न मम ॥ तुभ्यमग्नेपर्यवहन्निति सूर्यासावित्रीसूर्यासावित्र्यनुष्टुप्० । ॐ तुभ्यमग्ने० । सूर्यासावित्र्या इदं न मम । सोमोददिति पंचानां सूर्यासावित्री सूर्यासावित्री अनुष्टुभौ जगती त्रिष्टुबनुष्टुभौ । ॐ सोमोददत्० ॐ इहैव स्तं मा० । ॐ आनः प्रजां ज० । ॐ अघोरच्क्षु० । ॐ इमां त्वमिंद्र० । ऋक्पंचस्वपि सूर्यासावित्र्या इदं न मम । एवं सप्तचर्वाहुतीर्हुत्वा । स्विष्टकृदादि समाप्य ॥ आचार्याय धेनुं दत्वा यथाशक्तिदक्षिणां दद्यात्। विप्रान्भोजयेत् ॥ ततः समाचारात् स्वकुलोचितनामकरणं कुर्यात् ॥ **इति शौनकोक्तः केवलद्व्यामुष्यायणदत्तकस्वयंदत्तप्रयोगः समाप्तः ॥**

**(२) अथ बोधायनोक्तः पुत्रप्रतिग्रहप्रयोगः। तत्र मूलं बौधायनसूत्रं।** पुत्रप्रतिग्रहविधिं व्याख्यास्यामः। शोणितशुक्रसंभवो मातापितृनिमित्तकः। तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ प्रभवतः। नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा सहि संतानाय पूर्वेषां। न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः। प्रतिग्रहीष्यन्नुपकल्पयते। द्वे वाससी। द्वे कुण्डले। अंगुलीयकं चाचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममिति। अथ बंधूनाहूय। मध्ये राजनि चावेद्य परिषदि च। आगारमध्ये ब्राह्मणानन्नेन परिविष्य। पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा। अथ

देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा । दातुः समक्षं गत्वा । पुत्रं देहीति भिक्षेत । ददामीतीतर आह । तं प्रतिगृह्णाति धर्माय त्वा प्रतिगृह्णामि संतत्यै त्वा गृह्णामि । अथैनं वस्त्रकुंडलाभ्यामंगुलीयकेन चालंकृत्य । परिधानप्रभृत्यग्निमुखांतं कृत्वा । पक्वान् जुहोति । यस्त्वाहृदाकीरिणामन्यमान इति पुरोऽनुवाक्यामनूच्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोति । अथ व्याहृतीर्हुत्वा । स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् । दक्षिणांददात्येते च वाससी परिधाय एते च कुण्डले एतच्चांगुलीयकं । यद्येवं कृत्वौरसः पुत्र उत्पद्यते तुरीयभागे प्रभवति । इति ह स्माह बौधायनः । **इति ॥** **अस्यार्थः ।** पर्णमयं पालाशमयं । मध्ये राजनीति । सभायां बंधुसमक्षं राज्ञे प्रतिग्रहावेदनमित्याशयः । ददामीति इतर आह । इतरो दातेत्यर्थः । **शेषं स्पष्टं ॥ इति ॥**

## अथ प्रयोगः ॥

मुहूर्तदिने बंधूनाहूय । तत्समक्षं राजनियुक्तग्रामाधिकारिणे प्रतिग्रहं कथयित्वा । स्नात्वा ॥ आचम्य ॥ पवित्रे धृत्वा ॥ प्राणनायम्य ॥ देशकालौ संकीर्त्य ॥ **केवलदत्तकप्रतिग्रहसंकल्पः ।** ग्रहीष्यमाणपुत्रस्य अमुकगोत्रामुकशर्मणां तज्जनकादीनां च परस्परं विद्यमानपितृपुत्रभावादितत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तिपूर्वकं अमुकगोत्रामुकशर्मणामस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादितत्तत्संबंधप्रवृत्तिद्वारा तत्तत्प्रयुक्तकार्यप्रवृत्तये पुत्रं प्रतिग्रहीष्ये । **केवलस्वयंदत्तेप्येष एव संकल्पः ।** **अथ द्व्यामुष्यायणदत्तकप्रतिग्रहसंकल्पः ।** ग्रहीष्यमाणपुत्रस्य अमुकगोत्रामुकशर्मणां तज्जनकादीनां च परस्परं विद्यमान-

पितृपुत्रभावादिसंबंधसत्त्वेऽपि अमुकगोत्रामुकशर्मणामस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिध्यर्थं पुत्रं प्रतिग्रहीष्ये ॥ **द्व्यामुष्यायणस्वयंदत्तप्रतिग्रहसंकल्पोऽप्येष एव ॥ इति संकल्प्य ॥** गणेशपूजनादिनांदीश्राद्धांतं विधाय ॥ आचार्यं वृत्वा मधुपर्केण पूजयेत् ॥ अगारमध्ये अन्नेन परिविष्य । त्रीन्ब्राह्मणान्बंधुवर्गांश्च भोजयेत् ॥ पुण्याहं । स्वस्ति । ऋद्धिं वाचयित्वा । आचार्यो यजमानानुज्ञया पुत्रप्रतिग्रहांगहोमं करिष्ये **इति संकल्प्य ।** देवयजनोल्लेखनादि आप्रणीताभ्यः कुर्यात् । अन्वाधाने चक्षुषी आज्येनेत्यंतमुक्त्वा । सकृदग्निं चरुणा । अग्निं वायुं सूर्यं प्रजापतिं चाज्येन । शेषेण स्विष्टकृतमित्याद्यन्वाधाय । प्रणीताप्रणयनांते ॥ ग्रहीता आचार्यप्रभृतिब्राह्मणैः सह दातुः समक्षं गत्वा । पुत्रं मे देहीति स्वयं भिक्षेत ॥ दाता ददामीत्याह ॥ **ततो दाता ॥** आचम्य ॥ पवित्रे धृत्वा । प्राणानायम्य ॥ देशकालौ संकीर्त्य ॥ **केवलदत्तकदानसंकल्पः ।** अमुकगोत्रामुकशर्मणामस्मदादीनां अस्य पुत्रस्य च परस्परं विद्यमानपितृपुत्रभावादितत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तये प्रतिग्रहीतुरस्य पुत्रस्य च परस्परं पितृपुत्रभावादितत्तत्संबंधप्रवृत्तिद्वारा तत्तत्प्रयुक्तकार्यप्रवृत्तये अमुकगोत्रायामुकशर्मणेऽसौ इमं पुत्रं दास्यामि । स्वयंदत्तेतु । अमुकगोत्रामुकशर्मणामस्मज्जनकादीनां मम च परस्परं प्रतिग्रहीतुर्मम च परस्परं० अमुकगोत्रायामुकशर्मणे असौ अहमात्मानं पुत्रत्वेन दास्यामि । **इति । अथ द्व्यामुष्यायणदत्तकदानसंकल्पः ॥** अमुकगोत्रामुकशर्मणामस्मदादीनां अस्य पुत्रस्य च परस्परं विद्यमानपितृपुत्रभावादिसंबंध-

सत्त्वेपि प्रतिग्रहीतुरस्य पुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिद्धये अमुकगोत्रायामुकशर्मणेऽस्मै इमं पुत्रं दास्यामि। इति॥ **द्व्यामुष्यायणस्वयंदत्ते तु।** अमुकगोत्रामुकशर्मणामस्मज्जनकादीनां मम च परस्परं० प्रतिग्रहीतुर्मम च परस्परं० अमुकगोत्रायामुकशर्मणेऽस्मै अहमात्मानं पुत्रत्वेन दास्यामि। **इति॥** गणेशपूजनादिनांदीश्राद्धांतं विधाय। प्रतिग्रहीतारं यथाशक्ति संपूज्य। इमं पुत्रं तव पैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं संप्रददे। न मम। **इति केवलदत्तके॥** अहमात्मानं पुत्रत्वेन तव पैतृक० संप्रददे। नाहं जनकपितुः॥ **इति केवलस्वयंदत्ते॥** ममैतत्पुत्रद्वारा संभाव्यमानपैतृकऋणापाकरणपुन्नामनरकत्राणसिद्धिसत्त्वेऽपि तव पैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं इमं पुत्रं तुभ्यमहं संप्रददे। इत्येवमात्रं। न मम इति तु नोच्चारयेत्। **इति द्व्यामुष्यायणदत्तके॥** मद्द्वारा मज्जनकपितुः संभाव्यमान० सिद्धिसत्त्वेऽपि तव पैतृक० अहमात्मानं पुत्रत्वेन तुभ्यं संप्रददे॥ **द्व्यामुष्यायणे।** "न मम" "नाहं जनकपितुः"। इतीमौ त्यागौ न संभवतः। **इति द्व्यामुष्यायणस्वयंदत्ते। केवलद्व्यामुष्यायणदत्तके।** प्रतिगृह्णातु पुत्रं भवान्। केवलद्व्यामुष्यायणस्वयंदत्ते। प्रतिगृह्णातु मां पुत्रत्वेन भवान्। इत्युक्त्वा दाता प्रतिग्रहीतृहस्ते जलं क्षिपेत्॥ दानसांगतासिध्यर्थं दक्षिणां च दद्यात्॥ **प्रतिग्रहीता** ॐ धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामि। इति मंत्रेण पुत्रं हस्तद्वयेन परिगृह्य॥ एनं पुत्रं वस्त्रकुंडलांगुलीयकैरलंकृत्य। गीतवाद्यैः स्वस्तिमंत्रैश्च गृहमानीय॥ पादौ प्रक्षाल्य॥ आचम्य॥ आचार्यदक्षिणतः स्वयं।

स्वदक्षिणे भार्या । तदुत्संगे तद्दक्षिणतो वा पुत्र इत्युपविशेत् ॥ ततआचार्यः । कुशमयं बर्हिः पालाशमिध्मं च संपाद्य । परिधानप्रभृत्यग्निमुखं कृत्वा चरुश्रपणं सादनान्ते पूर्वांगहोमं कृत्वा । चरुमवदाय । ॐ यस्त्वा हृदाकीरिणा० । इति पुरोनुवाक्यामुक्त्वा ॐ यस्मै त्वं सुकृते जातवेद० । इति याज्यया हुत्वा ॥ जातवेदसेऽग्नय इदं न मम ॥ ततो व्यस्तसमस्तव्याहृतीर्हुत्वा ॥ स्विष्टकृदादि समाप्य ॥ आचार्याय धेनुं दत्वा यथाशक्तिदक्षिणां च दद्यात् ॥ विप्रान्भोजयेत् ॥ ततः समाचारात्स्वकुलोचितनामकरणं कुर्यात् ॥

**इति बोधायनोक्तः केवलद्व्यामुष्यायणदत्तकस्वयंदत्तप्रयोगः समाप्तः ॥ २ ॥**

**( ३ ) अथ वसिष्ठोक्तः पुत्रप्रतिग्रहप्रयोगः ॥ तत्र मूलं वसिष्ठसूत्रं ॥** शोणितशुक्रसंभवः पुरुषो मातापितृनिमित्तकः । तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां । न स्त्री दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन् बंधूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतीर्हुत्वा । अदूरेबांधवं बंधुसंनिकृष्टमेव संप्रतिगृह्णीयात् । संदेहे चोत्पन्ने दूरे बान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहूंस्त्रायते **इति** । तस्मिंश्चेत्प्रतिगृहीते औरसः पुत्र उत्पद्यते चतुर्थभागभागी स्यादिति ॥ अस्यार्थः ॥ राजनि ग्रामाधीशे । निवेशनं गृहं । व्याहृतीः व्यस्ताःसमस्ताश्चेति । आज्यभागान्ते आहुतिचतुष्टयं हुत्वेत्यर्थः ॥ शेषे कश्चिदंशः पूर्वं व्याख्यातः । कश्चिदंशः स्पष्ट इति ॥ **यद्यप्यत्रोपवासादयो धर्मा नोक्तास्तथाप्यविरोधिनस्ते सर्वे शाखाप्रत्ययेन शौनकाद्युक्ता ग्राह्याः ॥**

## अथ प्रयोगः ॥

**पूर्वेद्युरुपवासं कृत्वा** ॥ परेद्युर्बंधूनाहूय । पुत्रप्रतिग्रहं राज्ञे तन्नियुक्तग्रामाधिकारिभ्यो वा कथयित्वा ॥ आचम्य ॥ प्राणानायम्य ॥ पवित्रधारणं ॥ देशकालसंकीर्तनं । **संकल्पः । तत्रादौ केवलदत्तकप्रतिग्रहसंकल्पः ।** ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रभावादितत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तये अमुकगोत्रामुकशर्मणामस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधप्रवृत्तिद्वारा तत्कार्यप्रवृत्तये च पुत्रं प्रतिग्रहीष्ये ॥ **केवलस्वयंदत्तेप्येष एव संकल्पः ॥ अथ द्व्यामुष्यायणदत्तकप्रतिग्रहसंकल्पः ॥** ग्रहीष्यमाणपुत्रस्य अमुकगोत्रामुकशर्मणां तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रभावादिसंबंधसत्त्वेऽपि अमुकगोत्रामुकशर्मणामस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिध्यर्थं पुत्रं प्रतिग्रहीष्ये ॥ **द्व्यामुष्यायणस्वयंदत्तप्रतिग्रहसंकल्पोप्येष एव ॥ इति संकल्पः ॥** गणेशपूजनादिनांदीश्राद्धांतं विधाय ॥ आचार्यं वृत्वा मधुपर्केण संपूजयेत् ॥ ततः पुत्रप्रतिग्रहांगत्वेन त्रीन्ब्राह्मणान्बंधुवर्गांश्च भोजयिष्ये ॥ इति ब्राह्मणेभ्यो बंधुवर्गेभ्यश्चान्नदानं ॥ ततो गृहमध्ये स्थंडिले पंचभूसंस्कारपूर्वकमाग्निं प्रतिष्ठाप्य ॥ दक्षिणतो ब्रह्मासनमास्तीर्येत्यादिचरुवर्जमाज्यभागान्ते ॥ आज्येन व्यस्तसमस्त**व्याहृतिभिर्होमः** ॥ ॐ भूः स्वाहा । इदमग्नये न मम । ॐ भुवः स्वाहा । इदं वायवे न मम । ॐ स्वः स्वाहा । इदं सूर्याय न मम ॥ ॐ भूर्भुवः स्वः स्वाहा । इदं प्रजापतये न मम ॥ ततो भूराद्या नवाहुतयः ॥ स्विष्टकृदादि-

प्रणीताविमोकांतं ॥ ततआचार्यप्रभृतिब्राह्मणैः सह दातुः समक्षं गच्छेत् । एतस्मै पुत्रं देहीति आचार्यो याचेत ॥ मह्यं पुत्रं देहीति स्वयं वा याचेत ॥ **ततो दाता** ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ **देशकालसंकीर्तनं** ॥ **संकल्पः** ॥ **तत्रादौ केवलदत्तकदानसंकल्पः** ॥ अमुकगोत्रामुकशर्मणामस्मदादीनामस्य पुत्रस्य च परस्परं वर्तमानपितृपुत्रभावादितत्तत्संबंधतत्तत्प्रयुक्तकार्यनिवृत्तये प्रतिग्रहीतुरस्य पुत्रस्य च परस्परं पितृपुत्रभावादितत्तत्संबंधप्रवृत्तिद्वारा तत्तत्प्रयुक्तकार्यप्रवृत्तये अमुकगोत्रायामुकशर्मणेऽस्मै पुत्रं दास्यामि ॥ **इति** ॥ **केवलस्वयंदत्ते तु** ॥ अमुकगोत्रामुकशर्मणामस्मज्जनकादीनां मम च परस्परं० प्रतिग्रहीतुर्मम च परस्परं० अमुकगोत्रायामुकशर्मणेऽस्मै अहमात्मानं पुत्रत्वेन दास्यामि ॥ **इति** ॥ **अथ द्व्यामुष्यायणदत्तकदानसंकल्पः** ॥ अमुकगोत्रामुकशर्मणामस्मदादीनामस्य पुत्रस्य च परस्परं वर्तमानपितृपुत्रभावादिसंबंधसत्त्वेऽपि प्रतिग्रहीतुरस्य पुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिद्धये अमुकगोत्रायामुकशर्मणेऽस्मै पुत्रं दास्यामि ॥ **इति** ॥ **द्व्यामुष्यायणस्वयंदत्ते तु** । अमुकगोत्रामुकशर्मणामस्मज्जनकादीनां मम च परस्परं० प्रतिग्रहीतुर्मम च परस्परं० अमुकगोत्रायामुकशर्मणेऽस्मै अहमात्मानं पुत्रत्वेन दास्यामि ॥ **इति** ॥ गणेशपूजनादिनांदीश्राद्धांतं विधाय ॥ प्रतिग्रहीतारं यथाशक्ति संपूज्य ॥ इमं पुत्रं तव पैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं संप्रददे । न मम ॥ **इति केवलदत्तके** ॥ अहमात्मानं पुत्रत्वेन तव पैतृक० संप्रददे । नाहं जनकपितुः ॥ **इति केवलस्वयंदत्ते** ॥ ममैतत्पुत्र-

द्वारा संभाव्यमानपैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थमिमं पुत्रं तुभ्यमहं संप्रददे । इत्येवमात्रं ॥ **इति द्व्यामुष्यायणदत्तके** ॥ मद्द्वारा मज्जनकपितुः संभाव्यमान० सिद्धिसत्त्वेऽपि तव पैतृक० अहमात्मानं पुत्रत्वेन तुभ्यमहं संप्रददे । इत्येवमात्रं ॥ द्व्यामुष्यायणे "नमम" "नाहं जनकपितुः" इतीमौ त्यागौ न भवतः ॥ **इति द्व्यामुष्यायणस्वयंदत्ते ॥ केवलद्व्यामुष्यायणदत्तके** ॥ प्रतिगृह्णातु पुत्रं भवान् । केवलद्व्यामुष्यायणस्वयंदत्ते । प्रतिगृह्णातु मां पुत्रत्वेन भवान् । इत्युक्त्वा दाता प्रतिग्रहीतृहस्ते जलं निक्षिपेत् ॥ दानसांगतासिध्यर्थं दक्षिणां च दद्यात् । प्रतिग्रहीता । ॐ देवस्य त्वा० भ्यां । **प्रतिगृह्णामि** । इति मंत्रेण हस्तद्वयेन प्रतिगृह्य । ॐ कोदात् कस्मा० कामैतत्ते० ॥ इति कामस्तुतिं पठेत् ॥ स्वांके उपवेश्य । ॐ अंगादंगात्सं० शतं ॥ इति मंत्रेण शिशुमूर्द्धनि अवजिघ्रेत् ॥ सकृन्मंत्रेण द्विस्तूष्णीं ॥ ततो वस्त्रकुण्डलांगुलीयकचंदनतिलकपुष्पमालाद्यलंकृतं पुत्रं गीतवाद्यैः स्वस्तिमंत्रैश्च स्वगृहमानीय ॥ पादौ प्रक्षाल्य ॥ आचम्य । आचार्यदक्षिणतः स्वयं । स्वदक्षिणे भार्या । भार्योत्संगे तद्दक्षिणतो वा पुत्र इत्युपविशेत् ॥ **ततः समाचारात् स्वकुलोचितनामकरणं कुर्यात्** ॥ आचार्याय धेनुं दत्वा यथाशक्तिदक्षिणां च दद्यात् ॥ विप्रान्भोजयेत् ॥ **इति वसिष्ठोक्तः केवलद्व्यामुष्यायणदत्तकस्वयंदत्तः प्रयोगः समाप्तः** ॥

**(४) अथ स्त्रीशूद्राणां वासिष्ठः पुत्रप्रतिग्रह प्रयोगः** ॥ पूर्वेद्युरुपवासं कृत्वा । परेद्युर्बंधूनाहूय । पुत्रप्रतिग्रहं

राज्ञे तन्नियुक्तग्रामाधिकारिभ्यो वा कथयित्वा । आचमनं । तूष्णींप्राणायामः। पवित्र धारणं। देशकालसंकीर्तनं। **संकल्पः। तत्रादौ केवलदत्तकप्रतिग्रहसंकल्पः।** ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रभावादितत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तये अमुकगोत्रामुकनाम्नीनां (शूद्रे अमुकदासीनां अस्मदादीनां ग्रहीष्यमाण पुत्रस्य च पितृपुत्रभावादितत्तत्संबंधप्रवृत्तिद्वारा तत्तत्प्रयुक्तकार्यप्रवृत्तये पुत्रं प्रतिग्रहीष्ये ॥ **इति॥ केवलस्वयंदत्तेऽप्येष एव संकल्पः। अथ द्व्यामुष्यायणदत्तकप्रतिग्रहसंकल्पः।** ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रभावादितत्तत्संबंधसत्त्वेऽपि अमुकगोत्रामुकनाम्नीनां (शूद्रे अमुकदासीनां) अस्मदादीनां ग्रहीष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिध्यर्थं पुत्रं प्रतिग्रहीष्ये। इति॥ **द्व्यामुष्यायणस्वयंदत्तप्रतिग्रहसंकल्पोप्येष एव॥** गणेशपूजनादिनांदीश्राद्धांतं विधाय॥ आचार्यं वृत्वा मधुपर्केण संपूजयेत्॥ पुत्रप्रतिग्रहांगत्वेन त्रीन्ब्राह्मणान्बंधुवर्गांश्च भोजयिष्ये॥ इति ब्राह्मणेभ्यो बंधुवर्गेभ्योन्नदानं॥ ततो गृहमध्ये स्थंडिले पंचभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य॥ दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि चरुवर्जमाज्यभागान्ते। आज्येन व्यस्तसमस्तव्याहृतिभिर्होमः॥ ॐ भूः स्वाहा। इदमग्नये न मम। ॐ भुवः स्वाहा। इदं वायवे न मम। ॐ स्वः स्वाहा। इदं सूर्याय। ॐ भूर्भुवः स्वः स्वाहा। इदं प्रजापतये न मम। शूद्रे तु नाममंत्रेण होमः॥ अग्नये नमः। इदमग्नये न मम। वायवे नमः। इदं वायवे न मम। सूर्याय नमः। इदं सूर्याय न मम॥ प्रजापतये नमः। इदं प्रजापतये न मम॥

ततो भूराद्या नवाहुतयः ॥ स्विष्टकृदादिप्रणीताविमोकांतं कृत्वा ॥ तत आचार्यप्रभृतिब्राह्मणैः सह दातुः ( दात्र्याः ) समक्षं गच्छेत् ॥ एतस्यै ( शूद्रे एतस्यै ) पुत्रं देहीति आचार्यो याचेत । मह्यं पुत्रं देहीति स्वयं वा याचेत ॥ **ततो दाता** ॥ ( दात्री ) आचम्य ॥ तूष्णीं प्राणनायम्य ॥ पवित्रे धृत्वा । देशकालौ संकीर्त्य ॥ **केवलदत्तकदानसंकल्पः** । अमुकगोत्रामुकनाम्नीनां ( शूद्रे अमुकदासानां ) अस्मदादीनामस्य पुत्रस्य च परस्परं वर्तमानपितृपुत्रभावादि तत्तत्संबंधनिवृत्तिद्वारा तत्तत्कार्यनिवृत्तये प्रतिग्रहीतुः ( प्रतिग्रहीत्र्या ) अस्य पुत्रस्य च परस्परं पितृपुत्रभावादि तत्तत्संबंधप्रवृत्तिद्वारा तत्तत्कार्यप्रवृत्तये अमुकगोत्राया अमुकनाम्न्यै अस्यै । शूद्रे अमुकदासायास्यै पुत्रं दास्यामि ॥ **इति** ॥ अमुकगोत्रामुकनाम्नीनां ( शूद्रे अमुकदासानां ) अस्मज्जनकादीनां मम च परस्परं० प्रतिग्रहीतुः ( प्रतिग्रहीत्र्याः ) ममच परस्परं० अमुकगोत्रायै अमुकनाम्न्यै अस्यै ( शूद्रे अमुकदासायास्यै ) अहमात्मानं पुत्रत्वेन दास्यामि ॥ **इति केवलस्वयंदत्तदानसंकल्पः** ॥ **अथ द्व्यामुष्यायणदत्तकदानसंकल्पः** ॥ अमुकगोत्रामुकनाम्नीनां ( शूद्रे अमुकदासानां) आस्मदादीनामस्य पुत्रस्य च परस्परं वर्तमानपितृपुत्रभावादिसंबंधसत्त्वेऽपि प्रतिग्रहीतुः ( प्रतिग्रहीत्र्याः ) अस्य पुत्रस्य च परस्परं पितृपुत्रभावादिसंबंधसिध्यर्थं अमुकगोत्रायै अमुकनाम्न्यै अस्यै ( शूद्रे अमुकदासायास्यै ) पुत्रं दास्यामि ॥ **इति** ॥ **द्व्यामुष्यायणस्वयं दत्ते तु** । अमुकगोत्रामुकनाम्नीनां ( शूद्रे अमुकदासानां ) अस्मज्जनकादीनां मम च परस्परं० प्रतिग्रहीतुः ( त्र्याः ) मम च परस्परं० अमुकगोत्रायै अमुकनाम्न्यै अस्यै ( शूद्रे अमुकदासायास्यै )

अहमात्मानं पुत्रत्वेन दास्यामि ॥ **इति** ॥ गणेशपूजनादिनांदीश्राद्धांतं विधाय ॥ प्रतिग्रहीतारं यथाशक्ति संपूज्य ॥ इमं पुत्रं तव पैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं संप्रददे । न मम ॥ **इति केवलदत्तके** ॥ अहमात्मानं पुत्रत्वेन तव पैतृक० संप्रददे ॥ नाहं जनकपितुः ॥ **इति केवलस्वयंदत्ते** ॥ ममैतत्पुत्रद्वारा संभाव्यमानपैतृकऋणापाकरणपुन्नामनरकत्राणसिद्धिसत्त्वेऽपि तव पैतृकऋणापाकरणपुन्नामनरकत्राणसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं इमं पुत्रं तुभ्यमहं संप्रददे । इत्येवमात्रं ॥ **इति द्व्यामुष्यायणदत्तके** ॥ मद्वाराजनकपितुः संभाव्यमान० सिद्धिसत्त्वेऽपि तव पैतृक० अहमात्मानं पुत्रत्वेन तुभ्यं संप्रददे । इत्येवमात्रं ॥ **द्व्यामुष्यायणे** "न मम" "नाहं जनकपितुः" इतीमौ त्यागौ न भवतः ॥ **इति द्व्यामुष्यायणस्वयंदत्ते** ॥ **केवलद्व्यामुष्यायणदत्तके** ॥ प्रतिगृह्णातु पुत्रं भवती । शूद्रे पुरुषे भवान् । केवलद्व्यामुष्यायणस्वयंदत्ते । प्रतिगृह्णातु मां पुत्रत्वेन भवती। ( शूद्रे पुरुषे ) प्रतिगृह्णातु मां पुत्रत्वेन भवान् । इत्युक्त्वा प्रतिग्रहीतृहस्ते जलं क्षिपेत् । दानसांगतासिध्यर्थं दक्षिणां च दद्यात् । प्रतिग्रहीता (त्री) प्रतिगृह्णामि । इति हस्तद्वयेन प्रतिगृह्य । स्वांके उपवेश्य । मूर्ध्नानं त्रिरवजिघ्रेत्तूष्णीं ॥ तत एनं वस्त्रकुंडलांगुलीयकचंदनतिलकपुष्पमालाद्यलंकृतं पुत्रं गीतवाद्यैः स्वस्तिमंत्रैश्च स्वगृहमानीय पादौ प्रक्षाल्य । आचम्य ॥ अग्नेः पश्चादाचार्यदक्षिणतः स्वयं । स्वोत्संगे स्वदक्षिणतो वा पुत्रः ( शूद्रे पुरुषे स्वदक्षिणे भार्या । भार्योत्संगे तद्दक्षिणतो वा पुत्रः ) इत्युपविशेत् ॥ **ततः समाचारात्स्वकुलोचितनामकरणं कुर्यात्** । आचार्याय धेनुं दत्वा

यथाशक्तिदक्षिणां च दद्यात् । ब्राह्मणान्भोजयेत् ॥ **इति स्त्रीशूद्राणां वासिष्ठोक्तः केवलद्व्यामुष्यायणदत्तकस्वयंदत्तप्रतिग्रहप्रयोगः समाप्तः ॥**

**(९) अथ सर्वेषां ब्राह्मणादिचातुर्वर्णिकानां कृत्रिमपुत्रकरणप्रयोगः** ॥ पूर्वेद्युरुपवासः ॥ परेद्युर्बंधूनाहूय । पुत्रकरणं राज्ञे तन्नियुक्तग्रामाधिकारिभ्यः कथयित्वा ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालसंकीर्तनं ॥ **संकल्पः ॥ केवलकृत्रिमपुत्रकरणसंकल्पः** ॥ करिष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं विद्यमानपितृपुत्रभावादि तत्तत्संबंधनिवृत्तिद्वारा तत्तत्प्रयुक्तकार्यनिवृत्तिपूर्वकं अमुकगोत्रामुकशर्मणां (स्त्रियां नाम्नीनां) (शूद्रे दासानां) अस्मदादीनां करिष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादितत्तत्संबंधप्रवृत्तिद्वारा तत्तत्प्रयुक्तकार्यप्रवृत्तये पुत्रं करिष्ये । **इति ॥ अथ द्व्यामुष्यायणकृत्रिमपुत्रकरणसंकल्पः** । करिष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं विद्यमानपितृपुत्रभावादिसंबंधसत्त्वेऽपि अमुकगोत्रामुकशर्मणा (स्त्रियां नाम्नीनां, शूद्रे दासानां) मस्मदादीनां करिष्यमाणपुत्रस्य च परस्परं पितृपुत्रभावादितत्तत्संबंधसिद्धये पुत्रं करिष्ये ॥ **इति** ॥ गणेशपूजनादिनांदीश्राद्धान्तं विधाय ॥ आचार्यं वृत्वा मधुपर्केण संपूजयेत् ॥ पुत्रकरणांगत्वेन त्रीन्ब्राह्मणान्बंधुवर्गांश्च भोजयिष्ये (शूद्रे ब्राह्मणेभ्य आमान्नदानं ॥ बंधुवर्गेभ्यो भोजनं) इति ब्राह्मणबंधुवर्गेभ्योऽन्नदानं ॥ **ततः** आचार्यप्रभृतिब्राह्मणैः सह पुत्रसमक्षं गच्छेत् ॥ एतस्य त्वां केवलकृत्रिमाख्यं पुत्रं द्व्यामुष्यायणकृत्रिमाख्यं पुत्रं वा क्रिये । इत्याचार्यो याचेत । अहं वां केवल-

कृत्रिमाख्यं पुत्रं व्द्यामुष्यायणकृत्रिमाख्यं पुत्रं वा क्रिये । इति स्वयं वा याचेत ॥ तेन "कुरु" इत्युक्ते तं पुत्रं स्वांके उपवेश्य ॥ ॐ अंगादंगात्सं० शतं ॥ इतिमंत्रेण सकृत्द्विस्तूष्णीं शिशुं मूर्द्धनि जिघ्रेत् ( स्त्रीशूद्रयोस्तु त्रिवारमपि तूष्णीं ) ॥ तत एनं वस्त्रकुंडलांगुलीयकचंदनतिलकपुष्पमालाद्यलंकृतं पुत्रं गीतवाद्यैः स्वस्तिमंत्रैश्च स्वगृहमानीय ॥ पादौ प्रक्षाल्य ॥ आचम्य ॥ आचार्यदक्षिणतः स्वयं ॥ स्वदक्षिणे भार्या ॥ भार्योत्संगे तद्दक्षिणतो वा पुत्रः ( स्त्रियां स्वयं अग्रे पश्चिमतः ॥ स्वोत्संगे स्वदक्षिणतो वा पुत्रः ) इत्युपविशेत् ॥ **ततः समाचारा**त्स्वकुलोचितनामकरणं कुर्यात् ॥ आचार्याय धेनुं दत्वा यथाशक्तिदक्षिणां च दद्यात् ॥ ब्राह्मणान्भोजयेत् ॥ **इति सर्वेषां ब्राह्मणादिचातुर्वर्णिकानां केवलव्द्यामुष्यायणकृत्रिमपुत्रकरणप्रयोगः समाप्तः ॥**

वासिष्ठे केवलव्द्यामुष्यायणदत्तकस्वयंदत्तप्रयोगे केवलव्द्यामुष्यायणकृत्रिमप्रयोगे च यत्र यत्र शर्मशब्दस्य प्रयोगस्तत्र तत्र क्रमात् वर्मगुप्तशब्दयोरूहे कृते क्षत्रियवैश्ययोः केवलव्द्यामुष्यायणदत्तकस्वयंदत्तकृत्रिम**प्रयोगा भवंतीति विशेषः ॥ इति ॥**

इतिश्रीगोदातटिनीतटनिकटवर्तिश्रीमन्नासिकमहाक्षेत्रवासिना
"वारे" इत्युपनाम्ना ज्योतिर्विज्जयरामप्रपौत्रभट्टात्याजी-
सूरिपौत्र श्रीमज्जगद्गुरुशंकराचार्यदत्त "वैदिकति-
लक" पदसंभूषित अण्णा शास्त्रिणः सूनुना
"काव्यतीर्थोपाधिकेन" श्रीधरशर्मणा
विरचितो दत्तकनिर्णयामृतं नाम
प्रबंधः समाप्तः ॥

## प्रबंधप्रणयनकालः ॥

प्रख्यातेभुविभारतेमुनियुगव्यालेंदु १८४७ संज्ञे शके ॥
भद्रेक्रोधनहायनाश्विनशुचौ घस्रे दशम्यां रवौ ॥
नूत्नं दत्तकनिर्णयामृतमिदं धर्मानुशिष्ट्यर्णवात् ॥
पीत्वा निर्मथितं कुशाग्रमतयस्तृप्यंतु तज्ज्ञा बुधाः ॥ १ ॥
दूरमुत्सार्य मात्सर्यं सदसद्व्यक्तिकारणाः ।
शास्त्रं गृह्णंतु संशोध्य प्रार्थयामीति सादरम् ॥ २ ॥

## लिखितं ॥

वैशाखशुक्ल २ शनिवार शके १८५३ शुक्लनामसंवत्सरे ७।५।२९

**श्रीधर अण्णा शास्त्री वारे.**

श्रीक्षेत्र नासिक

सोमवारपेठ घर नं० २०२२

---

# शुक्लयजुःशाखीयब्रह्मकर्मप्रदीप-
## प्रथम भाग.



या पुस्तकांत एकंदर १० विषय असून अल्पवयी विद्यार्थ्यांस ब्रह्मकर्माचें एक वर्षाचें शिक्षण दिलें जाईल अशा योजनेनें हें पुस्तक तयार केलें आहे. व यावर वेदांतवागीश श्रीधरशास्त्री पाठक यांचा अभिप्राय आला आहे, तो येणेंप्रमाणेः—

## अभिप्राय.

"ब्रह्मकर्मप्रदीप भाग १ हें पुस्तक वाचून पाहिलें. एकंदर पुस्तकाचें धोरण चांगलें आहे व योजनाही मुलांचे शक्तीकडे लक्ष देऊन केलेली दिसते. वैदिक मंत्र जाड टाईपांत घातल्यानें स्पष्ट प्रत्यभिज्ञा ( स्पष्टज्ञान ) होतें. आपल्या पुस्तकानें सर्वांची सोय होणार आहे. राहिलेले चार भागही लवकर प्रसिद्ध व्हावे."

या अभिप्रायावरून सदर पुस्तकाची शास्त्रशुद्धता वाचकांचे लक्षांत सहजच येईल; व यावरून ब्रह्मकर्माचें प्राथमिक शिक्षण क्रमशः पांच वर्षें पुरें देण्याची योजना पुरी करण्याचा संकल्प केला आहे. त्यापैकीं प्रथम भाग प्रसिद्ध झाला. पुढें लवकरच चार भाग प्रसिद्ध होतील.

ज्यांना आपले मुलांस इतर शिक्षण सांभाळून ब्रह्मकर्म शिकवावें असें वाटत असेल त्यांना हीं पुस्तकें उपयुक्त आहेत.

हा पहिला भाग घेऊन पुढील भागांकरितां ज्यांना नांवें नोंदवावयाचीं असतील त्यांनीं खालील पत्त्यावर कळविण्याची कृपा करावी. पुस्तकें जसजशीं प्रसिद्ध होतील तसतसीं पाठविण्यांत येतील.

पत्ताः—
सोमवारपेठ, नासिक,
घर नंबर २०२२.

श्रीधर अण्णाशास्त्री वारे
नासिक.

